# ५. क्रिया केवलमुत्तरम्

भवद्भिरामवसरप्रदानाय वचांसि नः ।
पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः ॥ १ ॥

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वत्स्र्यन्तावामयः स च ॥ २ ॥

न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति ।
यत्तु दन्दह्यते लोकमदो दुःखाकरोति माम् ॥ ३ ॥

मम तावन्मतमिदं श्रूयतामङ्ग वामपि ।
ज्ञातसारोऽपि खल्वेकः संदिग्धे कार्यवस्तुनि ॥ ४ ॥

यावदर्थपदां वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥ ५ ॥

ततः सपत्नापनयस्मरणानुशयस्फुरा ।
ओष्ठेन रामो रामोष्ठबिम्बचुम्बनचञ्चुना ॥ ६ ॥

जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।
नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥ ७ ॥

यद्वासुदेवेनादीनमनादीनवमीरितम् ।
वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥ ८ ॥

नैतल्लघ्वपि भूयस्या वचो वाचातिशय्यते ।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥ ९ ॥

षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।
ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोप्यलम् ॥ १० ॥

आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती ।
तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥ ११ ॥

संपदा सुस्थिरं मन्यो भवति स्वल्पयापि यः ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम्       ॥ १२ ॥

विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।
अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते       ॥ १३ ॥

त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ।
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः       ॥ १४ ॥

विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम्       ॥ १५ ॥

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति       ॥ १६ ॥

यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः ।
वयं हनाम द्विषतः सर्वैः स्वार्थं समीहते       ॥ १७ ॥

इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः ।
सभाभित्तिप्रतिध्वानैर्भयादन्ववदन्निव       ॥ १८ ॥

—महाकविमाघविरचितशिशुपालवधमहाकाव्यस्य द्वितीयसर्गादुद्धृतम् ।

---

# ६. वीरकम्पणनृपाय कृपाणप्रदानम्

घुणजग्धकपाटसंपुटानि
स्फुटदूर्वाङ्कुरसन्धिमण्डपानि ।
श्लथगर्भगृहाणि वीक्ष्य दूये
भृशमन्यान्यपि देवताकुलानि ॥ १ ॥

मुखराणि पुरा मृदङ्गघोषै-
रभितो देवकुलानि यान्यभूवन् ।
तुमुलानि भवन्ति फेरवाणां
निनदैस्तानि भयङ्करैरिदानीम् ॥ २ ॥

अतिलङ्घ्य चिरन्तनीं स्वसीमा-
मपदेष्वर्पितजीवनप्रवृत्तिः ।
मुहुरुत्पथगामिनी तुलुष्का-
नधुना ह्यनुकरोति सह्यकन्या ॥ ३ ॥

सतताध्वरधूमसौरभैः प्राङ्-
निगमोद्घोषणवद्भिरग्रहारैः ।
अधुनाजनि विस्रमांसगन्धै-
रधिकक्षीबतुलुष्कसिंहनादैः ॥ ४ ॥

मधुरोपवनं निरीक्ष्य दूये
बहुशः खण्डितनालिकेरषण्डम् ।
परितो नृकरोटिकोटिहार-
प्रचलच्छूलपरम्परापरीतम् ॥ ५ ॥

रमणीयतरो बभूव यस्मिन्
रमणीनां मणिनूपुरप्रणादः ।
द्विजशृङ्खलिकाखलत्क्रियाभिः
कुरुते राजपथः स्वकर्णशूलम् ॥ ६ ॥

परितस्ततततन्तुवायतन्तु-
व्यतिषङ्गाज्जनितानि जालकानि ।
पुरगोपुरसालभञ्जिकानां
दधते चीनपटावगुण्ठनत्वम् ॥ ७ ॥

हिमचन्दनवारिसेकशीता-
न्यभवन्यानि गृहाङ्गणानि राज्ञाम् ।
हृदयं मम खेदयन्ति तानि
द्विजवन्दीनयनाम्बुदूषितानि ॥ ८ ॥

न तथा कटुघूत्कृताद्व्यथा मे
हृदि जीर्णोपवनेषु घूकलोकात् ।
परिशीलितपारसीकवाग्भ्यो
यवनानां भवने यथा शुकेभ्यः ॥ ९ ॥

स्तनचन्दनपाण्डु ताम्रपर्ण्या-
स्तरुणीनामभवत् पुरा यदम्भः ।
तदसृग्भिरुपैति शोणिमानं
निहतानामभितो गवां नृशंसैः ॥ १० ॥

सुवते न यथापुरं वसूनि
क्षितये वर्षति पूर्ववन्न शक्रः ।
शमनोऽपि जनं नयत्यकाण्डे
विषयेऽस्मिन् यवनैर्हतावशिष्टम् ॥ ११ ॥

श्वसितानिलशोषिताधराणि
श्लथशीर्णायितचूर्णकुन्तलानि ।
बहुबाष्पपरिप्लुतेक्षणानि
द्रमिडानां वदनानि वीक्ष्य दूये ॥ १२ ॥

श्रुतिरस्तमिता नयः प्रलीनो
विरता धर्मकथा च्युतं चरित्रम् ।
सुकृतं गतमाभिजात्यमस्तं
किमिवान्यत् कलिरेक एव धन्यः ॥ १३ ॥

इति सा निखिलं निवेद्य राज्ञे
यवनानां जनगर्हितं चरित्रम् ।
अतिभीषणमात्मनः प्रभावात्
कमपि प्रादुरभावयत् कृपाणम् ॥ १४ ॥

अमुमुग्रतपःकृतप्रसादः
प्रददौ पाण्ड्यनृपाय सोऽपि देवः ।
यमुपेत्य चिरेण तस्य वंश्याः
पृथिवीमप्रतिशासनामशासन् ॥ १५ ॥

अथ कालवशेन पाण्ड्यवंश्यान्
गतवीर्यानवधार्य कुम्भजन्मा ।
मनुजेश्वर ! मण्डलाग्रमेनं
भवते प्रेषितवान् महाभुजाय ॥ १६ ॥

अमुनाशु विशस्य दक्षिणस्यां
मधुरायां पुरि कंसवन्नृशंसम् ।
यवनाधिपतिं बलोत्तरस्त्वं
विदधीथाः स्फुटमच्युतावतारम् ॥ १७ ॥

—गङ्गादेवीविरचितमधुराविजयकाव्यस्य सप्तमसर्गादुद्धृतम् ।

# ७. शिलापुत्रिका वासवदत्ता

पतङ्गमण्डले मध्यं नभःस्थलमारूढे कन्दर्पकेतुः प्रबुद्धः, प्रियया विनाकृतं लतागृहमवलोक्य उत्थाय च तत इतो दत्तदृष्टिः, क्षणं विटपिषु, क्षणं लतान्तरेषु, क्षणमधःकूपेषु, क्षणमूर्ध्वं तरुशिखरेषु, क्षणं शुष्कपर्णराशिषु, क्षणमाकाशतले, क्षणं दिक्षु, क्षणं विदिक्षु च भ्रमन्ननवरतविरहानलदह्यमान-हृदयो विललाप । हा प्रिये ! वासवदत्ते, देहि मे दर्शनम् । कृतं परिहासेन । अन्तर्हितासि । त्वत्कृते यानि दुःखान्यनुभूतानि तेषां त्वमेव प्रमाणम् । हा प्रियसख मकरन्द ! पश्य मे दैवदुर्विलसितम् । अहो दुर्विपाका नियतिः । अहो दुरतिक्रमा कालगतिः । अहो विसदृशफलता गुरुजनाशिषाम् । अहो दुःस्वप्नानां दुर्निमित्तानां च फलम् । सर्वथा न किञ्चिदगोचरो भवितव्यानाम्' इति बहुविधं विलपन् मरणेच्छुर्दक्षिणेन काननं निर्गत्य महासागरकच्छोपान्तेन कतिपयदूरमध्वानं गत्वा अपरमिव गगनतलमवनितलमवतीर्णं जलनिधि-मपश्यत् ।

अचिन्तयच्च—अहो मे कृतापकारेणापि विधिनोपकृतिरेव कृता यदयं लोचनगोचरतां नीतः समुद्रः । तदत्र देहमुत्सृज्य प्रियाविरहाग्निं निर्वापयामि । यद्यप्यनातुरस्य देहत्यागो न विहितस्तथापि कार्यः । न खलु सर्वः सर्वं कार्यमेव करोति । असारे संसारे केन किं नाम न कृतम् । ततः कृतस्नानादिसकलकृत्यो जलनिधिजलमवतरितुमारेभे शरीरत्यागाय ।

अथ सानुग्रहेषु ग्राहेषु, निर्मत्सरेषु मत्स्येषु, अनिच्छेषु कच्छपेषु, अभयंकरेषु मकरेषु, आकाशसरस्वती समुदचरत्—'आर्य कन्दर्पकेतो ! पुनरपि तव प्रियया सङ्गतिर्भविष्यत्यचिरेण । तद्विरम मरणव्यवसायात्' इति । सोऽपि तदुपश्रुत्य मरणारम्भाद्विरराम । ततः प्रियासमागमाशया शरीरस्थिति-

हेतुमशनं चिकीर्षुः कच्छोपान्तवनं जगाम । अथ तत इतः परिभ्रमन् फलमूलादिना वने वर्तयन् कियन्तं कालं निनाय ।

कतिपयमासापगमे स्मेरकाश्मीररजःपिञ्जरितदशदिशि विकस्वरकमले शरत्समयारम्भे विजृम्भमाणे कन्दर्पकेतुरितस्ततः परिभ्रमन् काञ्चित् शिलापुत्रिकां मम प्रियानुकारिणीति करेण पस्पर्श ।

अथ सा स्पृष्टमात्रैव शिलाभावमुत्सृज्य वासवदत्तास्वरूपं प्रपेदे । तामवलोक्य कन्दर्पकेतुरमृतरसार्णवमग्न इव सुचिरमालिङ्ग्य, "प्रिये, वासवदत्ते ! किमेतत्" इति पप्रच्छ ।

सा तु दीर्घमुष्णं च निश्वस्य प्रत्युवाच—"आर्यपुत्र ! अपुण्याया मन्दभाग्याया मम कृते महाभागो भवान् उत्सृष्टराज्य एकाकी परिभ्रमन् प्राकृतजन इव अवाङ्मनसगोचरं दुःखमनुबभूव । उपवासदिने तृषातुरे भवति निद्राश्रान्ते प्रथमं प्रबुध्य अहं भवतः फलमूलादिकमाहरिष्यामि इति विचिन्त्य फलाद्यन्वेषणाय वने नल्वमात्रमगच्छम् ।

अन्यक्षणेन तरुगुल्मान्तरितं सेनानिवेशं दृष्ट्वा 'किमयं ममान्वेषणाय तातस्य व्यूहः समायातः । आहोस्विदार्यपुत्रस्येति चिन्तयन्तीं मां चार-कथितोदन्तो दूरात् किरातसेनापतिर्धावति स्म ।

अनन्तरं चिन्तितं मया यद्यहमार्यपुत्राय कथयामि तदा स एकाक्येभि-रेव हन्तव्योऽथ न कथयामि तदैभिरहं घातनीयेति चिन्ताक्षण एव एकामिष-लुब्धयोरिव गृध्रयोः तयोर्युद्धमासीत् । ततः प्रवृत्तशरासारदुर्दिनस्थगितदिनकर-किरणे रणखले शरीरेष्वनास्थां कलयन्तः समं द्विषतां धनुषां च जीवाकर्षणं योधाश्चक्रुः ।

अनन्तरं च नारायण इव कश्चिन्नरकच्छेदमकरोत् । कश्चिद्बौद्ध-सिद्धान्त इव क्षपितश्रुतिवचनदर्शनोऽभवत् । कश्चित्क्षपणक इव कटावृत-

विग्रहोऽभवत् । कश्चिदाशङ्कितोरुभङ्गः सुयोधन इव पयसि विवेश । कश्चित्सुरापद्विज इव पपात । कश्चित् शरतल्पगतो भीष्म इव गतायुश्चिरं श्वसन्नासीत् । कश्चित् कर्ण इव विक्लवीकृतसर्वाङ्गः शक्तिमोक्षमकरोत् । कश्चिद्राघव इव रावणवधमकरोत् ।

ततो विध्वस्तध्वजपटं पतत्पताकं च्युतचापचामरापीडं स्खलत्खड्गं तत्समस्तमुभयं मिथो जगाम हननं सैन्यम् ।

ततश्च यस्याश्रमः तेन मुनिना पुष्पादिकमादायागतेन योगदृशा प्रतिपन्नवृत्तान्तेन 'त्वत्कृते ममायमाश्रमो भग्नः' इति कुपितेन 'शिलामयी पुत्रिका भव' इति शप्तास्म्यहम् । ततः क्षणेनैवेयं वराकी बहुदुःखमनुभवती-त्यनुग्रहादार्यपुत्रकरुणया च स मुनिर्याच्यमान आर्यपुत्रहस्तस्पर्शावधिकं शापमकरोत् ।

ततः कन्दर्पकेतुः श्रुतवृत्तान्तेन समागतेन मकरन्देन तया वासवदत्तया च समं स्वपुरं गत्वा हृदयाभिलषितानि सुरलोकदुर्लभानि सुखानि ताभ्यां सहानुभवन् कालमनेकं निनाय ।

—सुबन्धुविरचितवासवदत्तागद्यकाव्यादुद्धृतम् ।

---

# ८. चन्द्रापीडस्य विद्याभ्यासः

क्रमेण कृतचूडाकरणादिक्रियाकलापस्य शैशवमतिचक्राम चन्द्रापीडस्य। तारापीडो व्यासङ्गविघातार्थं बहिर्नगरादनुसिप्रमर्धकोशमात्रायामम्, अतिमहता तुहिनगिरिशिखरमालानुकारिणा सुधाधवलितेन प्राकारमण्डलेन परिवृतम्, अनुप्राकारमाहितेन महता परिखावलयेन परिवेष्टितम्, अतिदृढकपाटसम्पुटम्, उद्घाटितैकद्वारप्रवेशम्, अधःकल्पितव्यायामशालम्, अमरागाराकारं विद्यामन्दिरमकारयत्। सर्वविद्याचार्याणां च सङ्ग्रहे यत्नमतिमहान्तमन्वतिष्ठत्।

तत्रस्थं च तं केसरिकिशोरकमिव पञ्जरगतं कृत्वा प्रतिषिद्धनिर्गमम्, आचार्यकुलपुत्रप्रायपरिजनपरिवारम्, अपनीताशेषशिशुजनक्रीडाव्यासङ्गम्, अनन्यमानसम्, अखिलविद्योपादानार्थमाचार्येभ्यश्चन्द्रापीडं शोभने दिवसे वैशम्पायनद्वितीयमर्पयांबभूव। प्रतिदिनं चोत्थायोत्थाय सह विलासवत्या विरलपरिजनस्तत्रैव गत्वैनमालोकयामास राजा। चन्द्रापीडोऽप्यनन्यहृदयतया अचिरेणैव कालेनाचार्यैरुपदिश्यमानाः सर्वा विद्या जग्राह।

मणिदर्पण इवातिनिर्मले तस्मिन् संचक्राम सकलः कलाकलापः। तथाहि। पदे, वाक्ये, प्रमाणे, धर्मशास्त्रे, राजनीतिषु, व्यायामविद्यासु, चापचक्रचर्मकृपाणशक्तितोमरपरशुगदाप्रभृतिषु सर्वेष्वायुधविशेषेषु, रथचर्यासु, गजपृष्ठेषु, वीणावेणुमुरजकांस्यतालदर्दुरपुटप्रभृतिषु वाद्येषु, भरतादिप्रणीतेषु नृत्तशास्त्रेषु, नारदीयप्रभृतिषु गान्धर्ववेदविशेषेषु, हस्तिशिक्षायां, तुरङ्गवयोज्ञाने, पुरुषलक्षणे, चित्रकर्मणि, पत्रच्छेद्ये, पुस्तकव्यापारे, लेख्यकर्मणि, सर्वासु द्यूतकलासु, शकुनिरुतज्ञाने, ग्रहगणिते, रत्नपरीक्षासु, दारुकर्मणि, दन्तव्यापारे, वास्तुविद्यासु, आयुर्वेदे, यन्त्रप्रयोगे, विषापहरणे, सुरङ्गोपभेदे, तरणे, लङ्घने, प्लुतिषु, इन्द्रजाले, कथासु,

नाटकेषु, आख्यायिकासु, काव्येषु, महाभारतपुराणेतिहासरामायणेषु, सर्वलिपिषु, सर्वदेशभाषासु, सर्वसंज्ञासु, सर्वशिल्पेषु, छन्दस्सु, अन्येष्वपि लोकविशेषेषु परं कौशलमवाप ।

एवं तस्य सर्वविद्यापरिचियमाचरतः चन्द्रापीडस्य त्रिभुवनलोभनीयोऽमृतरस इव सागरस्य, सकललोकहृदयानन्दजननश्चन्द्रोदय इव प्रदोषस्य, सुरधनुःकपाल इव जलधरसमयस्य, कुसुमप्रसव इव कल्पपादपस्य, सूर्योदय इव कमलवनस्य, कलाप इव शिखण्डिनः, यौवनारम्भः प्रादुर्भवन् रमणीयस्यापि द्विगुणां रमणीयतां पुपोष ।

लक्ष्म्या सह वितस्तार वक्षस्थलम् । अहितकलत्रालकलताभिः सह प्रलम्बतामुपययौ भुजयुगलम् । चरितेन सह धवलतामभजत लोचनयुगलम् । आज्ञया सह गुरुर्बभूव भुजशेखरदेशः । स्वरेण सह गम्भीरतामाजगाम हृदयम् ।

—बाणभट्टविरचित**कादम्बर्या** उद्धृतम् ।

---

# ९. सत्याश्रयः पुलकेशी

जयति भगवाञ्जिनेन्द्रो वीतजरामरणजन्मनो यस्य ।
ज्ञानसमुद्रान्तर्गतमखिलं जगदन्तरीपमिव ॥ १ ॥

तदनु चिरमपरिमेयश्चलुक्यकुलविपुलजलनिधिर्जयति ।
पृथिवीमौलिललाम्नां यः प्रभवः पुरुषरत्नानाम् ॥ २ ॥

शूरे विदुषि च विभजन्दानं मानं च युगपदेकत्र ।
अविहितयथासंख्यो जयति **सत्याश्रयः** सुचिरम् ॥ ३ ॥

**वरदा**तुङ्गतरङ्गरङ्गविलसद्धंसावलीमेखलां
**वनवासी**मवमृद्नतःसुरपुरप्रस्पर्धिनीं सम्पदा ।
महता यस्य बलार्णवेन परितः संच्छादितोर्वीतलं
स्थलदुर्गं जलदुर्गतामिव गतं तत्तत्क्षणे पश्यताम् ॥ ४ ॥

**गङ्गालुपेन्द्रा** व्यसनानि सप्त
हित्वा पुरोपार्जितसम्पदोऽपि ।
यस्यानुभावोपनताः सदास-
न्नासन्नसेवामृतपानशौण्डाः ॥ ५ ॥

**कोङ्कणेषु** यदादिष्टचण्डदण्डाम्बुवीचिभिः ।
उदस्तास्तरसा **मौर्यपल्वलाम्बुसमृद्धयः** ॥ ६ ॥

प्रतापोपनता यस्य **लाटमालवगुर्जराः** ।
दण्डोपनतसामन्तचर्याचार्या इवाभवन् ॥ ७ ॥

अपरिमितविभूतिस्फीतसामन्तसेना-
मुकुटमणिमयूखाक्रान्तपादारविन्दः ।
युधि पतितगजेन्द्रानीकबीभत्सभूतो
भयविगलितहर्षो येन चाकारि **हर्षः** ॥ ८ ॥

विधिवदुपचिताभिः शक्तिभिः शक्रकल्प-
स्तिसृभिरपि गुणौघैः स्वैश्च माहाकुलाद्यैः ।
अगमदधिपतित्वं यो **महाराष्ट्रकाणां**
नवनवतिसहस्रग्रामभाजां त्रयाणाम् ॥ ९ ॥

गृहिणां स्वगुणैस्त्रिवर्गतुङ्गा
विहितान्यक्षितिपालमानभङ्गाः ।
अभवन्नुपजातभीतिलिङ्गा
यदनीकेन **सकोसलाः कलिङ्गाः** ॥ १० ॥

पिष्टं **पिष्टपुरं** येन जातं दुर्गमदुर्गमम् ।
चित्रं यस्य कलेर्वृत्तं जातं दुर्गमदुर्गमम् ॥ ११ ॥

उद्धूतामलचामरध्वजशतच्छत्रान्धकारैर्बलैः
शौर्योत्साहरसोद्धतारिमथनैर्मौलादिभिः षड्विधैः ।
आक्रान्तात्मबलोन्नतिं बलरजःसञ्छन्न**काञ्चीपुर**-
प्राकारान्तरितप्रतापमकरोद्यः **पल्लवानां** पतिम् ॥ १२ ॥

**कावेरी** द्रुतशफरीविलोलनेत्रा
**चोलानां** सपदि जयोद्यतस्य यस्य ।
प्रश्च्योतन्मदगजसेतुरुद्धनीरा
संस्पर्शं परिहरति स्म रत्नराशेः ॥ १३ ॥

**चोलकेरलपाण्ड्यानां** योऽभूत्तत्र महर्द्धये ।
पल्लवानीकनीहारतुहिनेतरदीधितिः ॥ १४ ॥

उत्साहप्रभुमन्त्रशक्तिसहिते यस्मिन्समस्ता दिशो
जित्वा भूमिपतीन्विसृज्य महितानाराध्य देवद्विजान् ।
वातापीं नगरीं प्रविश्य नगरीमेकामिवोर्वीमिमां
चञ्चन्नीरधिनीलनीरपरिखां **सत्याश्रये** शासति ॥ १५ ॥

त्रिंशत्सु त्रिसहस्रेषु **भारतादाहवादितः** ।
सप्ताब्दशतयुक्तेषु गतेष्वब्देषु पञ्चसु ॥ १६ ॥

पञ्चाशत्सु कलौ काले षट्सु पञ्चशतासु च ।
समासु समतीतासु शकानामपि भूभुजाम् ॥ १७ ॥

तस्याम्बुधित्रयनिवारितशासनस्य
**सत्याश्रयस्य** परमाप्तवता प्रसादम् ।
शैलं जिनेन्द्रभवनं भवनं महिम्नां
निर्मापितं मतिमता **रविकीर्तिनेदम्** ॥ १८ ॥

प्रशस्तेर्वसतेश्चास्या जिनस्य त्रिजगद्गुरोः ।
कर्ता कारयिता चापि **रविकीर्तिः** कृती स्वयम् ॥ १९ ॥

येनायोजि न वेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां **रविकीर्तिः** कविताश्रित**कालिदासभारविकीर्तिः**
॥ २० ॥

—**ऐहोळेशासनत** उद्धृतम् ।

# १०. रामस्य पट्टाभिषेकाय दशरथः मतिं करोति

गच्छता दशरथेन निर्वृतिं भूभुजामसुलभां भुजाबलात् ।
मातुलस्य नगरे युधाजितः स्थापितौ भरतलक्ष्मणानुजौ ॥ १ ॥

अथ दशरथः पुत्रं रामं स्वतस्त्रिजगत्पतिं
स्वविषयमहीमात्रे कर्तुं पतिं विदधे मतिम् ।
भुवनभरणे कल्पं कल्याणभूधरमादरात्
स्वगृहपटलीधुर्यस्तम्भं विधातुमना इव ॥ २ ॥

तदनन्तरमसौ संमन्त्र्य सह पौरवृद्धान्वृद्धश्रवःपुरोधसः समान्समाहूय समादिदेश ।

विदितमेव हि भवतां शिवतातिमेव मतिं दधानाः सुपथा संचरमाणाः प्राणिनां दयमानमानसा मानधनाः यशःसमार्जनजागरूकाः जनोपताप-संमार्जनतत्पराः परां निर्वृतिमुपेत्य देवभूयं गताः सर्वे नः पूर्वपुरुषा इति ।

तस्मादस्माभिरपि तेषां मनीषामनुसरमाणैरेतावन्तं कालं परिपालिताः किल सकलाः प्रजाः ।

प्रमाणमत्र परिपालनक्रियामिमां मदीयामनुभवन्तो ननु भवन्त एव । भवतामभ्युपगमानां निगमानां प्रतीपगामिनीं पदवीं न प्रत्येति खलु लोकस्तदस्ति-किंचिदभ्यर्थनीयम् ।

मम सुरनरगीतख्यातिभिर्हेतिभिर्वा
दिवि भुवि च समानप्रक्रमैर्विक्रमैर्वा ।
नियतमपरिहार्या या जरा सा मदङ्गे
विकचकमलषण्डे चन्द्रिकेवाविरासीत् ॥ ३ ॥

तस्मात्समस्तक्षत्रवर्गगर्वपाटनवरिष्ठधारापरश्वधभरणभीषणवेषभार्गवभङ्गा-दपरिच्छिन्नतरशौर्यशालिनि सौजन्यभाजने जनानुरागनिलये निर्मत्सरे वत्सले वत्सेऽस्मिन्विश्वम्भराभारं चिरकालधार्यमाणमार्यैरनुमतः सन्नवतार्य विश्रान्तिसुख-मनुभवितुमभिलषामीति ।

ततः प्रावृषेण्यपयोवाहव्यूहस्तनितनादाकर्णसमुदीर्णनिरतिशयाह्लाद-संसर्गनिर्गलत्केकालापिनः कलापिन इव जनाः प्रमदभवकलकलरवमुखरित-हरिन्मुखा बभूवुः ।

आनन्दबाष्पविसरो वदने प्रजाना-
माविर्बभूव मकरन्द इवारविन्दे ।
रामस्य कान्तिमभिषेकदिने भवित्रीं
प्रक्षाल्य चक्षुरिव वीक्षितुमादरेण ॥ ४ ॥

राजापि तेषां संपत्स्यमानमहोत्सवोत्सुकजनसंमर्दजनिष्यमाणरजोराजि-पातपरिजिहीर्षयेव रोमाञ्चप्रपञ्चेन कञ्चुकिताङ्गानां प्रमाणातीतां प्रीतिं प्रपन्नानां हर्षप्रकर्षेण द्विगुणीकृतमानन्दमन्तर्नियम्य सुमन्त्रप्रमुखान् मन्त्रिमुख्यानेव-माचख्यौ ।

अस्माननाश्रिततपोवनभूमिभागा-
नुन्मुच्य मार्गपरिपालनजागरूकान् ।
अम्लानमौग्ध्यमचिरादवलम्ब्य राम-
मेवंविधः कथमुदेति जनानुरागः ॥ ५ ॥

तेऽपि नियमितनिजमनोरथाय दशरथाय सविनयमेवं व्यजिज्ञपन् ।

देवे स्थितेऽपि तनयं तव रामभद्रं
लोकः स्वयं भजतु नाम किमत्र चित्रम् ।
चन्द्रं विना तदुपलम्भनहेतुभूतं
क्षीरोदमाश्रयति किं तृषितश्चकोरः ॥ ६ ॥

तदनन्तरं तत्वरे तत्परस्तत्त्वविदां वरिष्ठस्य वसिष्ठस्य शासनादभिषेकोपकरणाहरणाय सामात्यः पौरवर्गः।

आहूय रामं विनयाभिराममाविःप्रमोदः प्रभुरेवमूचे।
तवोत्तमाङ्गे मुकुटं विधातुमह्नाय तिष्ये दिवसे यतिष्ये ॥ ७ ॥

अथ दशरथमनोरथं कौसल्यायै निवेद्य स्वभवनमुपागतस्य रामस्य भगवान् वसिष्ठः संजातकौतुकः कौतुकमङ्गलं निर्वर्तयामास।

आपूरयन्मङ्गलतूर्यघोषैराशावशावल्लभकर्णतालान्।
उज्जृम्भितः कोऽपि गिरामभूमिरुन्मस्तकः पौरजनप्रमोदः ॥ ८ ॥

—विदर्भराजविरचितचम्पूरामायणस्य अयोध्याकाण्डादुद्धृतम्।

---

# ११. विश्वगुणादर्शे गुणदोषदृष्टी

विश्वावलोकस्पृहया कदाचिद्विमानमारुह्य समानवेषम् ।
कृशानु-विश्वावसुनामधेयं गन्धर्वयुग्मं गगने चचार ॥ ॥ १ ॥

तत्र—

कृशानुरकृशासूयः पुरोभागिपदं गतः ।
विश्वावसुरभूद्विश्वगुणग्रहणकौतुकी ॥ ॥ २ ॥

## सूर्यवर्णनम्

अथ पुरतः समापतन्तमरविन्दबान्धवमवलोकयन्नवन्दतागमसागरपारदृश्वा विश्वावसुः ।

विश्वावसुः—

ब्रह्मचर्यव्रतोत्सर्गगुरवे कोकसन्ततेः ।
छायाविब्बोकलोलाय छान्दसज्योतिषे नमः ॥ ३ ॥

कृशानुः—अरे, सकलभुवनसंशोषकारिणं तपनमपि किं नमनकर्मीकरोषि पश्य—

पान्थान् दीनानहह वसुमानातपान्धान् विधत्ते
शुष्कां पृथ्वीं रचयतितरां शोषयत्योषधीश्च ।
कासाराणां हरति विभवं क्लान्तिशान्तिप्रदानां
क्रूरस्यैवं गुणलवकथा का स्वतो भास्वतोऽस्य ॥ ४ ॥

विश्वावसुः—किमरे, भगवन्तमरविन्दबान्धवमपि विनिन्दसि ? शृणु पुरोभागिन् ,

वृष्टिं घृष्टिभिरारचय्य जगतस्तुष्टिं सरीसर्ष्टि यः
पुष्टिं द्राग् विशिनष्टि दृष्टिषु नृणां ध्वान्तं पिनष्टि स्थिरम् ।
प्राज्ञानामपवर्गमार्गदममुं पद्मागृहोल्लासिनं
को न स्तौति ? समस्तलोकसुहृदं द्योभूषणं भूषणम् ॥ ५ ॥

## ज्यौतिषिकवर्णनम्

क इमे पुस्तकहस्ताः कल्य एवोत्थाय तत इतः पर्यटन्ति ।

कृशानुः—निपुणमवलोक्य सपरिहासम्—

ज्योतिःशास्त्रमहोदधौ बहुतरोत्सर्गापवादात्मभिः
कल्लोलैर्निबिडे कणान् कतिपयान् लब्ध्वा कृतार्था इव ।
दीर्घायुःसुतसंपदादिकथनैर्दैवज्ञपाशा इमे
गेहंगेहमनुप्रविश्य धनिनां मोहं मुहुः कुर्वते ॥ ६ ॥

किंच—

विलिखति सदसद्वा जन्मपत्रं जनानां
फलति यदि तदानीं दर्शयत्यात्मदाक्ष्यम् ।
न फलति यदि लग्नं द्रष्टुरेवाह मोहं
हरति धनमिहैवं हन्त ! दैवज्ञपाशः ॥ ७ ॥

अपिच—

प्रमोदे खेदे वाप्युपनमति पुंसो विधिवशा-
न्मयैवं प्रागेवाभिहितमिति मिथ्या कथयति ।
जनानिष्टानिष्टाकलनपरिहारैकनिरता-
नसौ मेषादीनां परिगणनयैव भ्रमयति ॥ ८ ॥

अस्तु वा तथ्यवादी दैवज्ञस्तथापि वृथा तद्वचःश्रवणम् ।

तथाहि—

असुखमथ सुखं वा कर्मणां पंक्तिवेला-
स्वहह ! नियतमेते भुञ्जते देहभाजः ।
तदिह पुरत एव प्राह मौहूर्तिकश्चेत्
कथय फलममीषामन्ततः किं ततः स्यात् ॥ ९ ॥

विश्वावसुः—ऐहिकामुष्मिककर्मारम्भोपयोगिनो नोपालम्भमर्हन्ति ज्योतिर्विदः ।

शृणु तावत्—

न दैवं न पित्र्यं च कर्मात्र सिध्ये-
न्न यत्रास्ति देशे ननु ज्योतिषज्ञः ।
न तारा न चारा नवानां ग्रहाणां
न तिथ्यादयो वा यतस्तत्र बुद्धाः ॥ १० ॥

यच्च समर्थितं मौहूर्तिकवचननिशमनं मुधेति तन्निपुणनिरूपणा न भणन्ति ।

यतः—

भानोः शीतकरस्य वापि भुजगग्रासे पुरोनिश्चिते
तीर्थानामटनं जनस्य घटयेत्तापत्रयोच्चाटनम् ।
इष्टे प्रागवधारिते सति धृतेस्तुष्टेश्च लाभो भवे-
दृष्टे तु व्यसनेऽत्र तत्परिहृतिः कर्तुं जपाद्यैः क्षमा ॥ ११ ॥

अविस्रम्भश्च दैवज्ञवचनेष्वनुपपन्नः ।

वृद्धिह्रासौ कुमुदसुहृदः पुष्पवन्तोपरागः
शुक्रादीनामुदयविलयावित्यमी सर्वदृष्टाः ।
आविष्कुर्वन्त्यखिलवचनेष्वत्र कुम्भीपुलाक-
न्यायाज्ज्योतिर्नयगतिविदां निश्चलं मानभावम् ॥ १२ ॥

इत्थं किल नीतिविदो विदुः—

विदैवज्ञं ग्रामं विबुधविधुरां भूपतिसभां
मुखं श्रुत्या हीनं मनुजपतिशून्यं च विषयम् ।
अनाचारान् दारानपहरिकथं काव्यमपि च
प्रवक्तृत्वापेतं गुरुमपि सुबुद्धिः परिहरेत् ॥ १३ ॥

—वेंकटाध्वरिविरचितविश्वगुणादर्शचम्पूकाव्यत उद्धृतम् ।

# १२. यक्षसन्देशः

तामायुष्मन्! मम च वचनादात्मनश्चोपकर्तुं
ब्रूयादेवं तव सहचरो रामगिर्याश्रमस्थः।
अव्यापन्नः कुशलमबले! पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥ १ ॥

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं
सास्रेणाश्रुद्रुतमविरतोत्कण्ठमुत्कण्ठितेन।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
संकल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥ २ ॥

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्ता-
त्कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात्।
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट-
स्त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥ ३ ॥

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान्।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्मिन्क्वचिदपि न ते चण्डि! सादृश्यमस्ति ॥ ४ ॥

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ ५ ॥

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ ६ ॥

नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत्कल्याणि ! त्वमपि नितरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ७ ॥

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान्मासान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ८ ॥

आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ ९ ॥

एतत्कृत्वा प्रियमनुचितप्रार्थनावर्तिनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।
इष्टान्देशाञ्जलद ! विचर प्रावृषा सम्भृतश्री-
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ १० ॥

—महाकविकालिदासविरचितमेघदूतस्य उत्तरमेघादुद्धृतम् ।

# १३. सुजनपद्धतिः

वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले
ह्येते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ १ ॥

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम्
॥ २ ॥

प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम्
त्वसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः ।
विपद्युच्चैर्धैर्यं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ३ ॥

प्रदानं प्रच्छन्नं, गृहमुपगते संभ्रमविधिः
प्रियं कृत्वा मौनं, सदसि कथनं नाप्युपकृतेः ।
अनुत्सेको लक्ष्म्याः निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ४ ॥

करे श्लाघ्यस्त्यागः, शिरसि गुरुपादप्रणयिता,
मुखे सत्या वाणी विजयिभुजयोर्वीर्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतैकव्रतफलं
विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ५ ॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ ६ ॥

संपत्सु महतां चित्तं भवत्युत्पलकोमलम् ।
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ ७ ॥

सन्तप्तायसि संस्थितस्य पयसो नामापि न श्रूयते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिसंपुटगतं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ८ ॥

यः प्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ९ ॥

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान् ख्यापयन्तः
स्वार्थान्संपादायन्तो विततपृथुतरारम्भयत्नाः परार्थे ।
क्षान्त्यैवाऽऽक्षेपरूक्षाक्षरमुखरमुखान् दुर्मुखान्दूषयन्तः
सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः
॥ १० ॥

—भर्तृहरिविरचितनीतिशतकादुद्धृतम् ।

# १४. अन्योक्तयः

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः ॥ १ ॥

पुरा सरसि मानसे विकचसारसालिस्खल-
त्परागसुरभीकृते पयसि यस्य यातं वयः ।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम् ॥ २ ॥

अयि दलदरविन्द स्यन्दमानं मरन्दं
तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः ।
दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्
परिमलमयमन्यो बान्धवो गन्धवाहः ॥ ३ ॥

तावत्कोकिलविरसान्यापय दिवसान् वनान्तरे निवसन् ।
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ ४ ॥

नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः ।
अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीतासि ॥ ५ ॥

अयि मलयज महिमायं कस्य गिरामस्तु विषयस्ते ।
उद्गिरतो यद्गरलं फणिनः पुष्णासि परिमलोद्गारैः ॥ ६ ॥

नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् ।
विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥ ७ ॥

आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्ति ।
संकोचमञ्चति सरस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैतु ॥ ८ ॥

गुञ्जति मञ्जु मिलिन्दे मा मालति मौनमुपयासीः ।
शिरसा वदान्यगुरवः सादरमेनं वहन्ति सुरतरवः ॥ ९ ॥

एकस्त्वं हगनेऽस्मिन् कोकिल न कलं कदाचिदपि कुर्याः ।
साजात्यशङ्कयामी न त्वां निघ्नन्ति निर्दयाः काकाः ॥ १० ॥

नापेक्षा न च दाक्षिण्यं न प्रीतिर्न च सङ्गतिः ।
तथापि हरते तापं लोकानामुन्नतो घनः ॥ ११ ॥

साकं ग्रावगणैर्लुठन्ति मणयस्तीरेऽर्कबिम्बोपमा
नीरे नीरचरैः समं स भगवान्निद्राति नारायणः ।
एवं वीक्ष्य तवाविवेकमपि च प्रौढिं परामुन्नतेः
किं निन्दान्यथवा स्तवानि कथय क्षीरार्णव त्वामहम् ॥ १२ ॥

किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते ।
सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम् ॥ १३ ॥

गिरिगह्वरेषु गुरुगर्वगुम्फितो
गजराजपोत न कदापि संचरेः ।
यदि बुध्यते हरिशिशुः स्तनन्धयो
भविता करेणुपरिशेषिता मही ॥ १४ ॥

गर्जितमाकर्ण्य मनागङ्के मातुर्निशार्धजातोऽपि ।
हरिशिशुरुत्पतितुं द्रागङ्गान्याकुञ्च्य लीयते निभृतम् ॥ १५ ॥

---

# १५. सुभाषितानि

कान्तावियोगः स्वजनापमानं
ऋणस्य शेषः कुजनस्य सेवा ।
दारिद्र्यभावाद्विमुखश्च मित्रं
विनाग्निना पञ्च दहन्ति तीव्राः ॥ १ ॥

वश्यश्च पुत्रोऽर्थकरी च विद्या
अरोगिता सज्जनसङ्गतिश्च ।
इष्टा च भार्या वशवर्तिनी च
दुःखस्य मूलोद्धरणानि पञ्च ॥ २ ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्थितकिञ्चिदर्धमधिकं बाल्यस्य काले गतम् ।
किञ्चिद्बन्धुवियोगदुःखमरणैर्भूपालसेवागतं
शेषं वारितरङ्गगर्भचपलं मानेन किं मानिनाम् ॥ ३ ॥

अहितहितविचारशून्यबुद्धेः
श्रुतिसमये बहुभिर्वितर्कितस्य ।
उदरभरणमात्रतुष्टबुद्धेः
पुरुषपशोः पशोश्च को विशेषः ॥ ४ ॥

यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानविक्रमयशोभिरभग्नमानैः ।
तन्नाम जीवितमिति प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ ५ ॥

किं जीवितेन धनमानविवर्जितेन
मित्रेण किं भवति भीतिसशंकितेन ।
सिंहव्रतं चरत गच्छत मा विषादं
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ ६ ॥

अर्थेन किं कृपणहस्तगतेन तेन
ज्ञानेन किं बहुशठाग्रहसंकुलेन ।
रूपेण किं गुणपराक्रमवर्जितेन
मित्रेण किं व्यसनकालपराङ्मुखेन ॥ ७ ॥

वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं मन्त्रिणः ।
पुष्पं पर्युषितं त्यजन्ति मधुपाः दग्धं वनान्तं मृगाः
सर्वे कार्यवशाज्जनोऽभिरमते कस्यास्ति को वल्लभः ॥ ८ ॥

कोऽर्थं प्राप्य न गर्वितो भुवि नरः कस्यापदो नागताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥ ९ ॥

स्वकर्मधर्मार्जितजीवितानां
शास्त्रेषु दारेषु सदा रतानाम् ।
जितेन्द्रियाणामतिथिप्रियाणां
गृहेऽपि मोक्षः पुरुषोत्तमानाम् ॥ १० ॥

—शौनकीयनीतिसारबृहस्पतिनीतिसाराभ्यामुद्धृतम्

---

# ಟಿಪ್ಪಣಿಗಳು

## ೧. कविकाव्यप्रशंसा

ಈ ಭಾಗದಲ್ಲಿಯ ಶ್ಲೋಕಗಳನ್ನು 'ಸುಭಾಷಿತ ಸಂಗ್ರಹಗಳು' ಗಂಗಾ ದೇವಿಯ 'ಮಧುರಾವಿಜಯ ಕಾವ್ಯ' ಹಾಗೂ ಭವಭೂತಿ ಮತ್ತು ರಾಜಶೇಖರರ ಗ್ರಂಥಗಳಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ವಾಚಕರಿಗೆ ಸಂಸ್ಕೃತದಲ್ಲಿಯ ಪ್ರಮುಖ ಕವಿಗಳ ಪರಿಚಯುವನ್ನು ಮಾಡಿಕೊಡುವ ದೃಷ್ಟಿಯಿಂದ ಆಯಾ ಕವಿಗಳ ವಿಷಯದಲ್ಲಿ ಪ್ರಚಲಿತವಿರುವ ಪ್ರಸಿದ್ಧವಾದ ಶ್ಲೋಕಗಳನ್ನು ಇಲ್ಲಿ ಸಂಗ್ರಹಿಸ ಲಾಗಿದೆ. ಈ ಶ್ಲೋಕಗಳಲ್ಲಿ ಆಯಾ ಕವಿಗಳ ರಚನೆಯ ವೈಶಿಷ್ಟ್ಯಗಳು ಒಂದೆರಡು ಮಾತುಗಳಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟಿವೆ. ಸಂಸ್ಕೃತದಲ್ಲಿ ಇನ್ನೂ ಅನೇಕ ಪ್ರಸಿದ್ಧ ಕವಿಗಳು ಮತ್ತು ಅವರ ವಿಷಯಕವಾದ ಕೆಲವು ಸೂಕ್ತಿಗಳು ಇದ್ದರೂ ವಾಚಕ ರಿಗೆ ಭಾರವಾಗಬಾರದೆಂದು ಅತಿ ಪ್ರಮುಖರಾದ ಕೆಲವರ ಬಗೆಗಿನ ಶ್ಲೋಕಗಳನ್ನು ಮಾತ್ರ ಇಲ್ಲಿ ನಿರ್ದೇಶಿಸಲಾಗಿದೆ.

ಕಾವ್ಯಗಳ ಗುಣದೋಷಗಳು, ಪ್ರಯೋಜನ, ಸಹೃದಯರಿಗೂ ಕಾವ್ಯಕ್ಕೂ ಕವಿಗಳಿಗೂ ಇರಬೇಕಾದ ಅನ್ಯೋನ್ಯ, ಕವಿಗಳಿಗೂ ಆಶ್ರಯದಾತರಾದ ರಾಜ ರಿಗೂ ಇರಬೇಕಾದ ಅನ್ಯೋನ್ಯ, ಇವುಗಳನ್ನು ಸೂಚಿಸುವ ಕೆಲವು ಶ್ಲೋಕ ಗಳನ್ನೂ ಇಲ್ಲಿ ಕೊಡಲಾಗಿದೆ.

1. ಈ ಶ್ಲೋಕವನ್ನು ಭವಭೂತಿಯ 'ಉತ್ತರ ರಾಮಚರಿತಮ್' ನಾಟಕದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಅಲ್ಲಿ ಇದು ಆರಂಭದಲ್ಲಿ ಬರುವ ಮಂಗಳ ಶ್ಲೋಕ. ಇದರ ಮೊದಲನೆಯ ಸಾಲಿನಲ್ಲಿ ಪ್ರಾಚೀನ ಕವಿಗಳನ್ನೆಲ್ಲಾ ನಮಸ್ಕರಿಸ ಲಾಗಿದೆ. ಆದಿಕವಿ ವಾಲ್ಮೀಕಿಯೇ ಭವಭೂತಿಯ ಮನಸ್ಸಿನಲ್ಲಿದ್ದರೂ ಈ ಮಾತು ಎಲ್ಲ ಪ್ರಾಚೀನ ಕವಿಗಳಿಗೂ ಅನ್ವಯಿಸುತ್ತದೆ. ಈ ಶ್ಲೋಕದ ಎರಡನೆಯ ಸಾಲಿನಲ್ಲಿ ಕವಿಯು ಸರಸ್ವತಿಯನ್ನು ನಮಸ್ಕರಿಸಿದ್ದಾನೆ.

**नमोवाकम्**—नमश्शब्दस्य वाकः उच्चारणं यस्मिन् तद् यथा तथा इति क्रियाया विशेषणम्, **आत्मनः कलाम्** ಪರಮಾತ್ಮನ ಅಂಶಭೂತಳಾದ,

**2.** ಈ ಶ್ಲೋಕವನ್ನು ಸುಭಾಷಿತ ಸಂಗ್ರಹಗಳಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ಸಂಸ್ಕೃತ ಭಾಷೆಯ, ಸಂಸ್ಕೃತ ಕಾವ್ಯಗಳ ಮತ್ತು ಸುಭಾಷಿತಗಳ ಮಾಧುರ್ಯವನ್ನು ವರ್ಣಿಸಲಾಗಿದೆ.

**3.** ಈ ಶ್ಲೋಕವನ್ನು ಸುಭಾಷಿತ ಸಂಗ್ರಹಗಳಿಂದ ಆರಿಸಿಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ನಿರ್ಮಲವಾದ ಪ್ರತಿಭೆ ಮತ್ತು ಜ್ಞಾನವನ್ನು ಪ್ರಶಂಸಿಸಲಾಗಿದೆ.

**प्रदुग्धे**—प्र + दुह् ಧಾತುವಿನ ಲಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

**रुणद्धि**—रुध् ಧಾತುವಿನ ಲಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

**प्रमार्ष्टि**—प्र+ मृष् ಧಾತುವಿನ ಲಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

**पुनीते**—पूञ् ಧಾತುವಿನ ಲಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ, (ಆತ್ಮನೇ ಪದ)

**4.** ಈ ಶ್ಲೋಕವನ್ನು ಅಗ್ನಿಪುರಾಣದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಸಾಹಿತ್ಯ ದರ್ಪಣಕಾರನಾದ ವಿಶ್ವನಾಥನು ಇದನ್ನು ಉಲ್ಲೇಖಿಸುತ್ತಾನೆ. 'ಒಳ್ಳೆಯ ಕಾವ್ಯಗಳ ಅಧ್ಯಯನದಿಂದ ಚತುರ್ವಿಧ ಪುರುಷಾರ್ಥಗಳನ್ನು ಸಾಧಿಸಲು ಸಹಾಯವಾಗುತ್ತದೆ. ಕುಶಲಕಲೆಗಳಲ್ಲಿ ಪ್ರಾವೀಣ್ಯ ಉಂಟಾಗುತ್ತದೆ. ಸಂತೋಷವೂ ಕೀರ್ತಿಯೂ ದೊರೆಯುತ್ತವೆ' ಎಂದು ಇಲ್ಲಿ ಕಾವ್ಯಗಳ ಅಧ್ಯಯನದ ಸಾರ್ಥಕತೆಯನ್ನು ಪ್ರಶಂಸಿಸಲಾಗಿದೆ.

**5.** ಈ ಶ್ಲೋಕವನ್ನು ಸುಭಾಷಿತರತ್ನಭಾಂಡಾಗಾರದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ಕವಿತಾಯುವತಿಗೆ ಕವಿಯು ತಂದೆಯೆಂದೂ ರಸಿಕನು ಪತಿಯೆಂದೂ ವಿವೇಕಿಗಳು ಅಣ್ಣ ತಮ್ಮಂದಿರೆಂದೂ ಸುಂದರವಾಗಿ ವರ್ಣಿಸಲಾಗಿದೆ.

**6.** ಈ ಶ್ಲೋಕವನ್ನು ಸುಭಾಷಿತ ಸಂಗ್ರಹಗಳಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ಕವಿಗಳಿಂದ ರಾಜರು ಕೀರ್ತಿಯನ್ನು ಪಡೆಯುವರೆಂದೂ ರಾಜರಿಂದ ಕವಿಗಳು ಆಶ್ರಯವನ್ನು ಪಡೆಯುವರೆಂದೂ ಪರಸ್ಪರ ಸಹಕಾರವನ್ನು ವರ್ಣಿಸಲಾಗಿದೆ.

**7.** ಈ ಶ್ಲೋಕದಲ್ಲಿ ವಾಲ್ಮೀಕಿ, ವ್ಯಾಸ, ಕಾಲಿದಾಸ, ಬಿಹ್ಲಣ, ವಿದ್ಯಾಪತಿ ಇತ್ಯಾದಿ ಮಹಾಕವಿಗಳ ಕೃತಿಗಳಿಂದಲೇ ಆಯಾ ರಾಜರು ಕೀರ್ತಿಶಾಲಿಗಳಾದರು ಎಂದು ವರ್ಣಿಸಲಾಗಿದೆ.

**8.** ಈ ಶ್ಲೋಕವನ್ನು ಸುಭಾಷಿತ ಸಂಗ್ರಹಗಳಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ವ್ಯಾಸಮಹರ್ಷಿಗಳನ್ನು ಸ್ತುತಿಸಲಾಗಿದೆ.

**9.** ಈ ಶ್ಲೋಕ ಹಾಗೂ 11 ರಿಂದ 14ರ ವರೆಗಿನ ಶ್ಲೋಕಗಳನ್ನು ಗಂಗಾದೇವಿಯ 'ಮಧುರಾ ವಿಜಯ' ದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ಆದಿಕವಿ ವಾಲ್ಮೀಕಿಯನ್ನು ಪ್ರಶಂಸಿಸಲಾಗಿದೆ.

**10.** ಈ ಶ್ಲೋಕವನ್ನು ಬಾಣನ ಹರ್ಷಚರಿತೆಯಿಂದ ಆರಿಸಿಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ಭಾಸನ ನಾಟಕಗಳಲ್ಲಿಯ ವೈಶಿಷ್ಟ್ಯಗಳನ್ನು ಉಲ್ಲೇಖಿಸಿ ಅವನನ್ನು ಪ್ರಶಂಸಿಸಲಾಗಿದೆ. ಮಂಗಲ ಶ್ಲೋಕಕ್ಕಿಂತ ಮೊದಲು ಸೂತ್ರಧಾರನು ಪ್ರವೇಶಿಸುವುದು, ಅನೇಕ ಪಾತ್ರಗಳಿರುವುದು, ಪತಾಕಾಸ್ಥಾನಗಳಿರುವುದು ಇವು ಭಾಸನ ನಾಟಕಗಳ ಕೆಲವು ವೈಶಿಷ್ಟ್ಯಗಳು. ಈಗ ಉಪಲಬ್ಧವಾಗಿರುವ ಭಾಸನ ಹದಿಮೂರು ನಾಟಕಗಳಲ್ಲಿ ಇವು ಕಂಡುಬರುವುವು. ಭಾಸನ ನಾಟಕಗಳನ್ನು ಶ್ಲೇಷ ಪದಗಳಿಂದ ದೇವಾಲಯಗಳಿಗೆ ಹೋಲಿಸಲಾಗಿದೆ. ಸೂತ್ರಧಾರರೆಂದರೆ ಶಿಲ್ಪಿಗಳು—ದೇವಾಲಯ ಕಟ್ಟಲು ಆರಂಭಿಸುವವರು. ದೇವಾಲಯಗಳ ಮೇಲೆ ಧ್ವಜಗಳಿರುವದು ಇತ್ಯಾದ್ಯಂಶಗಳನ್ನು ಹೋಲಿಕೆಗೆ ಉಪಯೋಗಿಸಿಕೊಳ್ಳಲಾಗಿದೆ.

**11.** ಈ ಶ್ಲೋಕವನ್ನು ಗಂಗಾದೇವಿಯ 'ಮಧುರಾ ವಿಜಯ' ದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ಮುಂದಿನ ಅನೇಕ ಕವಿಗಳು ಕಾಲಿದಾಸನಿಂದ ಪ್ರಭಾವಿತರಾಗಿದ್ದಾರೆ ಎಂದು ಕಾಲಿದಾಸನ ಕೃತಿಗಳ ಕವಿಪ್ರಿಯತೆಯನ್ನು ವರ್ಣಿಸಲಾಗಿದೆ.

**12.** ಈ ಶ್ಲೋಕವನ್ನೂ ಗಂಗಾದೇವಿಯ 'ಮಧುರಾ ವಿಜಯ'ದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ಬಾಣನ ಶೈಲಿಯ ಮಾಧುರ್ಯವನ್ನು ವೀಣೆಯ ನಾದದ ಮಾಧುರ್ಯಕ್ಕೆ ಹೋಲಿಸಲಾಗಿದೆ

वाण्याः पाणिना परामृष्टा वीणा, तस्याः निक्वाणं हरतीति
ಸರಸ್ವತಿಯ ಕೈಯಿಂದ ಮೀಟಲ್ಪಟ್ಟ ವೀಣೆಯ ಸ್ವರದಂತೆ ಮಧುರವಾದ.

**13.** ಈ ಶ್ಲೋಕವನ್ನು ಗಂಗಾದೇವಿಯ 'ಮಧುರಾ ವಿಜಯ'ದಿಂದ ಆರಿಸಿಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ದಂಡಿಯ ಕೃತಿಯನ್ನು ಸರಸ್ವತಿಯ ವಿಲಾಸದ ರತ್ನಗನ್ನಡಿ ಎಂದು ಪ್ರಶಂಸಿಸಲಾಗಿದೆ. ಅವನ ವಾಙ್ಮಾಧುರ್ಯವನ್ನು ಅಮೃತಕ್ಕೆ ಹೋಲಿಸಲಾಗಿದೆ.

**14.** ಈ ಶ್ಲೋಕವು ಗಂಗಾದೇವಿಯ 'ಮಧುರಾ ವಿಜಯ'ದಿಂದ ಆರಿಸಿಕೊಂಡದ್ದು. ಇಲ್ಲಿ ಭಾರವಿಯ ಶೈಲಿಯನ್ನು ಬಕುಲ ಪುಷ್ಪಗಳ ಮಾಲೆಗೆ ಹೋಲಿಸಲಾಗಿದೆ. ಬಕುಲ ಪುಷ್ಪಗಳನ್ನು ಮರ್ದಿಸಿದಷ್ಟೂ ಸುವಾಸನೆಯು ಹೊರಸೂಸುವಂತೆ ಭಾರವಿಯ ಶ್ಲೋಕಗಳನ್ನು ಆಳವಾಗಿ ಪರಿಶೀಲಿಸಿದಷ್ಟೂ ಅರ್ಥದ ಮರ್ಮವು ವ್ಯಕ್ತವಾಗುವುದು ಎಂಬುದು ಗಂಗಾದೇವಿಯ ಅಭಿಪ್ರಾಯ.

विमर्देन व्यक्तं सौरभ्यं यस्याः सा ಮರ್ದಿಸಿದಷ್ಟೂ ಸುವಾಸನೆಯನ್ನು ವ್ಯಕ್ತ ಪಡಿಸುವ, ವಿಮರ್ಶಿಸಿದಷ್ಟೂ ಅರ್ಥ ಸೌಷ್ಠವವನ್ನು ವ್ಯಕ್ತಪಡಿಸುವ.

**15.** ಇದನ್ನು ಸುಭಾಷಿತ ರತ್ನಭಾಂಡಾಗಾರದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ಭವಭೂತಿಯು ಉತ್ತರ ರಾಮಚರಿತೆಯಲ್ಲಿ ಬಂದ

'अपि ग्रावा रोदिति अपि दलति वज्रस्य हृदयम्'

ಎಂಬ ಸಂದರ್ಭದ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ಭವಭೂತಿಯ ಕರುಣರಸ ಚಿತ್ರಣವನ್ನು ಪ್ರಶಂಸಿಸಲಾಗಿದೆ.

**16.** ಇಲ್ಲಿ ರಾಜಶೇಖರನು ಚೋರ, ಮಯೂರ, ಭಾಸ ಇತ್ಯಾದಿ ಕವಿಗಳನ್ನು ಕವಿತಾ ಕಾಮಿನಿಯ ಕೇಶಪಾಶ, ಕರ್ಣಾಭರಣ ಇತ್ಯಾದಿಗಳಿಗೆ ಹೋಲಿಸಿ ಪ್ರಶಂಸಿಸಿದ್ದಾನೆ.

**17.** ಈ ಶ್ಲೋಕದಲ್ಲಿ 'ಕೌಮುದೀ ಮಹೋತ್ಸವ' ನಾಟಕ ಕರ್ತೃ 'ವಿಜಯಾ' ಅಥವಾ 'ವಿಜ್ಜಿಕಾ' ಎಂಬ ಕವಯಿತ್ರಿಯನ್ನು ವರ್ಣಿಸಲಾಗಿದೆ. ಇವಳು ಬಾದಾಮಿಯ ಚಾಲುಕ್ಯರಾಜನಾದ ಎರಡನೆಯ ಪುಲಿಕೇಶಿಯ ಸೊಸೆ. ಇವಳ ಕೆಲವು ಸುಂದರವಾದ ಬಿಡಿ ಪದ್ಯಗಳು ದೊರೆಯುತ್ತವೆ. ಇವಳನ್ನು ಇಲ್ಲಿ ಸರಸ್ವತಿಗೆ ಹೋಲಿಸಲಾಗಿದೆ. ಇವಳೇ ಅಭಿಮಾನದಿಂದ ತನ್ನನ್ನು ಸರಸ್ವತಿಗೆ ಹೋಲಿಸಿಕೊಳ್ಳುತ್ತಿದ್ದಳೆಂಬುದು

नीलोत्पलदलश्यामां विज्जिकां मामजानता ।
वृथैव दण्डिना प्रोक्ता सर्वशुक्ला सरस्वती ॥

ಎಂಬ ಪದ್ಯದಿಂದ ತಿಳಿದುಬರುತ್ತದೆ.

**18.** ಇಲ್ಲಿ ಶೀಲಾ, ವಿಜ್ಜಾ ಅಂದರೆ ಮೇಲಿನ ಶ್ಲೋಕದಲ್ಲಿ ಬಂದ ವಿಜಯಾ ಅಥವಾ ವಿಜ್ಜಿಕಾ, ಮಾರುಲಾ, ಮೋರಿಕಾ ಇತ್ಯಾದಿ ಸಂಸ್ಕೃತ ಕವಯಿತ್ರಿಯರನ್ನು ವರ್ಣಿಸಲಾಗಿದೆ. ಇವರೆಲ್ಲರ ಬಿಡಿ ಪದ್ಯಗಳು ಸುಭಾಷಿತ ಸಂಗ್ರಹಗಳಲ್ಲಿ ದೊರೆಯುತ್ತವೆ.

**19.** ಈ ಪದ್ಯದಲ್ಲಿ 'ಅನರ್ಘರಾಘವ' ನಾಟಕ ಕರ್ತೃವಾದ ಮುರಾರಿಯನ್ನು ಪ್ರಶಂಸಿಸಲಾಗಿದೆ. ಮೇರು ಪರ್ವತವು ಸಮುದ್ರದ ತಳವನ್ನು ಮುಟ್ಟಿದಂತೆ ಮುರಾರಿಯ ಸಾಹಿತ್ಯ ಪ್ರಭುತ್ವವು ತಲಸ್ಪರ್ಶಿಯಾದುದು ಎಂದು ವರ್ಣಿಸಲಾಗಿದೆ.

**20-23.** ಈ ಶ್ಲೋಕಗಳನ್ನು ಗಂಗಾದೇವಿಯ 'ಮಧುರಾ ವಿಜಯ' ದಿಂದ ಆರಿಸಿಕೊಳ್ಳಲಾಗಿದೆ. (ಸ-1, ಶ್ಲೋ-17, 19, 20, 21) ಈ ಶ್ಲೋಕಗಳಲ್ಲಿ ಶಬ್ದ ಸೌಂದರ್ಯ, ಅರ್ಥ ಗಾಂಭೀರ್ಯ, ಭಾವಶಬಲತೆ, ರಸಪರಿಪ್ಲವತೆ,

ಈ ನಾಲ್ಕೂ ಇರುವ ಕಾವ್ಯ ಪ್ರಬಂಧಗಳು ದುರ್ಲಭವೆಂದೂ (20) ಕಾವ್ಯರಚನೆ ಯಲ್ಲಿ ಕೇವಲ ದೋಷಗಳನ್ನು ಪರಿಹರಿಸಿದರೆ ಸಾಲದು, ಗುಣವೂ ಇರಬೇಕು ಎಂದೂ ಹೇಳಲಾಗಿದೆ. ಸಹೃದಯರಲ್ಲದ ವಾಚಕರು ದೋಷಗಳನ್ನೇ ಹೇಗೆ ಹುಡುಕುವರೆಂದೂ ತೋರಿಸಲಾಗಿದೆ (22). ಕೃತಿಚೌರ್ಯಮಾಡಿ ಬರೆದ ಕಾವ್ಯವು ಚಿರಸ್ಥಾಯಿಯಾಗಲಾರದು ಎಂದು ಹೇಳಲಾಗಿದೆ.

**24.** ಈ ಶ್ಲೋಕವನ್ನು ಸುಭಾಷಿತ ಸಂಗ್ರಹಗಳಿಂದ ಆಯ್ದುಕೊಳ್ಳ ಲಾಗಿದೆ. ಸಹೃದಯ ವಾಚಕರ ಮೆಚ್ಚುಗೆಯೇ ಕಾವ್ಯದ ಯೋಗ್ಯತೆಯನ್ನು ವ್ಯಕ್ತಪಡಿಸುವುದು ಎಂದು ಇಲ್ಲಿ ಸೂಚಿಸಲಾಗಿದೆ.

**25.** ಈ ಶ್ಲೋಕವನ್ನು ಗಂಗಾದೇವಿಯ 'ಮಧುರಾ ವಿಜಯ'ದಿಂದ ಆರಿಸಲಾಗಿದೆ. ಇಲ್ಲಿ ಒಳ್ಳೆಯ ಕಾವ್ಯಗಳನ್ನು ಓದಲು ಸಹೃದಯರಾದವರಿಗೆ ಬಲವಂತ ಮಾಡುವ ಅಗತ್ಯವಿಲ್ಲವೆಂದು ಭ್ರಮರದ ದೃಷ್ಟಾಂತದಿಂದ ಸುಂದರ ವಾಗಿ ನಿರೂಪಿಸಲಾಗಿದೆ.

---

# २. अतिथेः राजनीतिः

'अतिथेः राजनीतिः' ಎಂಬ ಈ ಭಾಗವನ್ನು ರಘುವಂಶ ಮಹಾಕಾವ್ಯದ 17ನೇ ಸರ್ಗದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ರಘುವಂಶವು ಮಹಾಕವಿ ಕಾಲಿದಾಸನು ರಚಿಸಿದ 19 ಸರ್ಗ ವಿಸ್ತಾರವುಳ್ಳ ಮಹಾಕಾವ್ಯವು. ಇದರಲ್ಲಿ ದಿಲೀಪ, ರಘು, ಅಜ, ದಶರಥ, ಶ್ರೀರಾಮ, ಕುಶ, ಅತಿಥಿ ಎಂಬ ಏಳು ಜನ ಇಕ್ಷ್ವಾಕು ವಂಶದ ರಾಜರ ಕಾವ್ಯಮಯವಾದ ವರ್ಣನೆ ಇದೆ. ಈ ಎಲ್ಲ ಆದರ್ಶ ರಾಜರ ಆದರ್ಶ ಗುಣಗಳನ್ನು ಚಿತ್ರಿಸುವುದೇ ತನ್ನ ಉದ್ದೇಶವೆಂದು ಕವಿಯು—

तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः

ಎಂದು ಮೊದಲನೇ ಸರ್ಗದಲ್ಲಿಯೇ ಹೇಳಿದ್ದಾನೆ. ಅವರ ಆದರ್ಶ ಗುಣಗಳನ್ನು

त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥

ಎಂದು ಸಂಕ್ಷೇಪವಾಗಿ ನಿರ್ದೇಶಿಸಿದ್ದಾನೆ. ಮುಂದೆ ದಿಲೀಪನ ಸತ್ಯನಿಷ್ಠೆ, ರಘು ರಾಜನ ಪರಾಕ್ರಮ, ಔದಾರ್ಯ, ಅಜನ ಪ್ರೇಮ, ದಶರಥನ ಪುತ್ರವಾತ್ಸಲ್ಯ, ಶ್ರೀರಾಮನ ಧೀರೋದಾತ್ತ ಚರಿತೆಯನ್ನು ಸುಂದರವಾಗಿಯೂ ಸಂಗ್ರಹ ರೂಪ ವಾಗಿಯೂ ಚಿತ್ರಿಸಿ, ಕುಶನ ರಾಜ್ಯಭಾರವನ್ನು ವರ್ಣಿಸಿ, 17ನೆಯ ಸರ್ಗದಲ್ಲಿ ಕುಶನ ಮಗನಾದ ಅತಿಥಿಯ ವ್ಯಕ್ತಿತ್ವವನ್ನು ಚಿತ್ರಿಸಿದ್ದಾನೆ. ಅತಿಥಿಯ ವರ್ಣನೆ ಯಲ್ಲಿ ಅವನ ರಾಜನೀತಿ ಕೌಶಲವು ಸುಂದರವಾಗಿ ನಿರೂಪಿಸಲ್ಪಟ್ಟಿದೆ. ಈ ನಿರೂಪಣೆಯನ್ನು ಇಲ್ಲಿ ಉದ್ಧರಿಸಲಾಗಿದೆ.

**1.** ಅತಿಥಿಯು ಕುಶನ ಮಗನು. ಶ್ರೀರಾಮನ ಮೊಮ್ಮಗನು. काकुत्स्थात् ಕಕುತ್ಸ್ಥನ ವಂಶದಲ್ಲಿ ಹುಟ್ಟಿದವನಿಂದ, ಕುಶನಿಂದ, ककुत्स्थस्य गोत्रापत्यं पुमान् काकुत्स्थः. ಕುಶನ ಪತ್ನಿಯ ಹೆಸರು ಕುಮುದ್ವತೀ. ಈ ಹೆಸರು ಕವಿ ಕಲ್ಪಿತವೆಂದು ತೋರುತ್ತದೆ. यामिन्याः यामः तस्मात् यामिनीयामात्, यामिनी ರಾತ್ರಿಯು, यामः ಪ್ರಹರವು, पश्चिमः ಕೊನೆಯ. चेतना ಬುದ್ಧಿಯು. प्राप = प्र + आप्, (आप्लृ व्याप्तौ) ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನದ ರೂಪವು.

**2.** अर्थं विदन्तीति अर्थविदः, तेषां वरः, अर्थविदांवरः ಜೀವನದ ಮಹತ್ವ ಯೋಜನವನ್ನು ಅರಿತವರಲ್ಲಿ ಶ್ರೇಷ್ಠನಾದ ಕುಶನು, अग्राहयत्–ग्रह् उपादाने ಎಂಬ ಧಾತುವಿನ ಲಙ್ ಪ್ರಥಮ ಪುರುಷ, ಣಿಜಂತ (ಪ್ರೇರಣಾರ್ಥಕ).

**3.** प्रसन्नः मुखरागः यस्य सः तम् (बहुव्रीहि) प्रसन्नमुखरागम्. स्मितपूर्वं यथा तथा अभिभाषते, तम् स्मितपूर्वाभिभाषिणम्. अमन्यन्त–मन् ज्ञाने ಧಾತುವಿನ ಲಙ್ ತೃತೀಯ ಪುರುಷ ಬಹುವಚನ.

**4.** सायकः ಬಾಣ, साधयेयुः साधृ-संसिद्धौ ಧಾತುವಿನ ವಿಧಿಲಿಙ್ ತೃತೀಯ ಪುರುಷ ಬಹುವಚನ. ಇಲ್ಲಿ तत्साध्यं किम् ಎಂಬ ಕಾಕುಸ್ವರದಿಂದ न किञ्चित् ಅಸಾಧ್ಯವಾದುದು ಯಾವುದೂ ಇಲ್ಲ ಎಂಬ ಅರ್ಥವು ಧ್ವನಿತವಾಗುತ್ತದೆ.

**5.** ಇಲ್ಲಿ 'अनित्य' ಎಂದರೆ ಬಾಹ್ಯ ಶತ್ರುಗಳ ಶತ್ರುತ್ವವು ಅನಿತ್ಯವು, ಬದಲಾಗುವಂಥದ್ದು ಎಂದು ಅಭಿಪ್ರಾಯ. विप्रकृष्टाः ದೂರದಲ್ಲಿರುವ, अभ्यन्तरान् ಒಳಗಿರುವ. विप्रकृष्ट — सन्निकृष्ट, बाह्य — अभ्यन्तर, ಇವು ವಿರುದ್ಧಾರ್ಥಕ ಪದಗಳು. ಕಾಮ, ಕ್ರೋಧ, ಲೋಭ, ಮೋಹ, ಮದ, ಮಾತ್ಸರ್ಯ—ಇವು ಷಡ್ರಿಪುಗಳು.

**6.** केवला ಶೌರ್ಯದ ಬೆಂಬಲವಿಲ್ಲದ, कातर्यं ಹೇಡಿತನವು, श्वापद ಕ್ರೂರ ಪ್ರಾಣಿಗಳು. समेत–सम् + इ (इण्-गतौ) ಭೂತಕೃದಂತ. अन्वियेष ಅರಸಿದನು. अनु + इयेष (इषु-इच्छायाम्) ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

**7.** न्यस्ताः प्रणिधयः एव दीधितयः यस्य सः तस्य न्यस्तप्रणिधिदीधितेः, प्रणिधयः ಗೂಢಚಾರರು. दीधितयः ಕಿರಣಗಳು. मण्डलम् ಸೂರ್ಯಬಿಂಬ, ರಾಷ್ಟ್ರ, वि + अभ्र – ಮೋಘ ರಹಿತವಾದ. विवस्वान् ಸೂರ್ಯ.

**8.** मन्त्रः ರಾಜನೀತಿಯ ಆಲೋಚನೆ. जातु ಅವ್ಯಯ. सेव्यमानः षेवृ-सेवने ಧಾತುವಿನ ವರ್ತಮಾನ ಕರ್ಮಣಿ ಕೃದಂತ. गुप्तद्वारः ಮುಖ ಮುದ್ರೆಯಿಂದಲೂ ಪ್ರಕಟಿಸದೆ.

**9.** रोद्धा ಮುತ್ತಿಗೆ ಹಾಕುವವನು. गजान् आस्कन्दति इति गजास्कन्दी. ಆನೆಗಳ ಮೇಲೆ ಏರಿ ಹೋಗುವವ. गिरिगुहासु शेते इति गिरिगुहाशयः ಬೆಟ್ಟದ ಗವಿಗಳಲ್ಲಿರುವ. ಇಲ್ಲಿಯೂ ಕಾಕುಪ್ರಯೋಗವಿರುವುದು. ಭಯದಿಂದ ಗವಿಗಳಲ್ಲಿ ಇರುವುದಿಲ್ಲ ಎಂದು ಅಭಿಪ್ರಾಯ. ದುರ್ಗಗಳ ವಿವಿಧ ಪ್ರಕಾರಗಳನ್ನು ಮನುಸ್ಮೃತಿಯಲ್ಲಿ ಹೀಗೆ ಹೇಳಿದೆ.

धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा ।
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥

**10.** उपचितः – उप + चि (चिङ् चयने) ಧಾತುವಿನ ಕರ್ಮಣಿ ಭೂತ ಕೃದಂತ.

ಅಭಿವೃದ್ಧಿಯನ್ನು ಹೊಂದಿದ, न पथः अपथः, तेन ದುರ್ಮಾರ್ಗದಿಂದ. प्रववृते – प्र + वृत् (वृतु वर्तने) ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

**11.** बबाधे – (बाधृ विलोडने) ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ. cf. धर्मार्थकामेषु समां प्रपेदे (ರಘುವಂಶ 14 ನೇ ಸರ್ಗ, 21ನೇ ಶ್ಲೋಕ.)

**12.** हीन ಶಕ್ತಿಯಿಲ್ಲದ, ಕ್ಷೀಣವಾದ. विकुर्वते ವಿರೋಧಿಸುವರು.

**13.** जीमूतः ಮೋಡ.

**14.** शक्तित्रयम् ಪ್ರಭು, ಮಂತ್ರ ಮತ್ತು ಉತ್ಸಾಹ ಇವು ಮೂರು ಶಕ್ತಿಗಳು. चकर्ष—कृष विलेखने ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

**15.** सुषुवे षूञ्-प्राणिप्रसवे ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ. दिदेश—दिश् अतिसर्जने ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

**16.** ಸಾಮ, ದಾನ, ಭೇದ ಮತ್ತು ದಂಡ ಇವು ಚತುರ್ವಿಧ ರಾಜನೀತಿಗಳು. तीर्थात् ಮಂತ್ರಿಯೇ ಮೊದಲಾದ 18ಕ್ಕೆ ತೀರ್ಥ ಎಂದು ಹೆಸರು. अप्रतीघातं ತಡೆಯಿಲ್ಲದೆ, प्रयुञ्जानः — प्र + युज् (युजिर्योगे) ಧಾತುವಿನ ವರ್ತಮಾನ ಕರ್ತರಿ ಕೃದಂತ. आनशे ಅನುಭವಿಸಿದನು.

---

# ३. सहसा विदधीत न क्रियाम्

ಈ ಭಾಗವನ್ನು ಮಹಾಕವಿ ಭಾರವಿಯಿಂದ ವಿರಚಿತವಾದ 'ಕಿರಾತಾರ್ಜುನೀಯ' ಮಹಾಕಾವ್ಯದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಮಹಾಭಾರತದ ವನಪರ್ವದಲ್ಲಿ ಬರುವ ಕಿರಾತ ರೂಪಿಯಾದ ಪರಮೇಶ್ವರ ಮತ್ತು ಅರ್ಜುನರ ಯುದ್ಧ, ಹಾಗೂ ಅರ್ಜುನನಿಗೆ ಪರಮೇಶ್ವರನು ಪಾಶುಪತಾಸ್ತ್ರವನ್ನು ಕೊಟ್ಟದ್ದೇ ಈ ಮಹಾಕಾವ್ಯದ ಕಥಾವಸ್ತು. ಈ ಮಹಾಕಾವ್ಯವು ಸಂಸ್ಕೃತದಲ್ಲಿ ಪ್ರಸಿದ್ಧವಾದ 'ಪಂಚ ಮಹಾಕಾವ್ಯ'ಗಳಲ್ಲಿ ಒಂದಾಗಿದೆ. ಈ ಕಾವ್ಯದ ಶೈಲಿಯು ಪ್ರೌಢವೂ ನಾನಾರ್ಥಭರಿತವೂ ಅನೇಕ ಅರ್ಥಾಂತರನ್ಯಾಸಗಳಿಂದ ಕೂಡಿದ್ದೂ ಆಗಿದೆ. ಆದುದರಿಂದಲೇ 'भारवेः अर्थगौरवम्' ಎಂಬ ಪ್ರತೀತಿಯಿದೆ. ದ್ರೌಪದಿ, ಭೀಮ ಮತ್ತು ಯುಧಿಷ್ಠಿರರ ರಾಜನೈತಿಕ ಸಂವಾದಗಳು, ಶರದೃತು, ಹಿಮಾಲಯಪರ್ವತ, ಸೂರ್ಯಾಸ್ತ, ಚಂದ್ರೋದಯ ಇತ್ಯಾದಿ ವರ್ಣನೆಗಳು ಅರ್ಜುನ ಪರಮೇಶ್ವರರ ಯುದ್ಧವರ್ಣನೆ ತುಂಬ ಪ್ರೌಢವಾಗಿವೆ. ದಂಡಿಯೇ ಮೊದಲಾದವರು ಹೇಳುವ ಸಂಸ್ಕೃತ ಮಹಾಕಾವ್ಯದ ಲಕ್ಷಣಕ್ಕೆ ಭಾರವಿಯ ಈ ಮಹಾಕಾವ್ಯ ಶ್ರೇಷ್ಠ ನಿದರ್ಶನವಾಗಿದೆ. ಖಡ್ಗಬಂಧ, ಮುರಜಬಂಧ, ಏಕಾಕ್ಷರ, ಸಮಾನ ಪಾದ ಇತ್ಯಾದಿಯಾಗಿ ಶ್ಲೋಕ ರಚನೆಯ ಕೌಶಲ್ಯವನ್ನು ತೋರಿಸಲು ಒಂದು ಸರ್ಗವನ್ನೇ ಕವಿಯು ಮೀಸಲಾಗಿಟ್ಟಿದ್ದಾನೆ. ಹೀಗೆ ಪಂಡಿತರಿಗೂ ಸಹೃದಯರಿಗೂ ಪ್ರಿಯವಾಗಿರುವ ಈ ಮಹಾಕಾವ್ಯದ ಎರಡನೆಯ ಸರ್ಗದಿಂದ ಯುಧಿಷ್ಠಿರನು ಭೀಮಸೇನನಿಗೆ 'ಇದು ಯುದ್ಧಕ್ಕೆ ಕಾಲವಲ್ಲ' ಎಂದು ತಾಳ್ಮೆಯನ್ನು ಬೋಧಿಸುವ ಭಾಗವನ್ನು ಇಲ್ಲಿ ಆಯ್ದುಕೊಡಲಾಗಿದೆ.

**1.** इति दर्शितविक्रियं कोपपरीतमानसं मरुतः सुतं, महीपतिः दुष्टं द्विरदमिव उपसान्त्वयितुं उपचक्रमे ।

दर्शिता विक्रिया येन सः तम् (बहुव्रीहिः) दर्शितविक्रियम् ವಿಕಾರ ವಶತೆಯನ್ನು ತೋರಿಸಿದ. कोपेन परीतं मानसं यस्य सः तम् (बहुव्रीहिः) कोपपरीतमानसम् ಕೋಪಾವಿಷ್ಟವಾದ ಮನಸ್ಸುಳ್ಳ, ಇವೆರಡು ಪದಗಳೂ ಭೀಮ ಮತ್ತು ಆನೆ ಎರಡಕ್ಕೂ ವಿಶೇಷಣಗಳು. द्वौ रदौ यस्य सः द्विरदः ಆನೆ. उपसान्त्वयितुम् सान्त्व् सान्त्वने ಧಾತುವಿನ ತುಮುನನ್ತಾವ್ಯಯ. ಣಿಚ್ (ಪ್ರೇರಣಾರ್ಥಕ). उप+क्रम्—(क्रमु पादविन्यासे) ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

ಇಲ್ಲಿ ಕೋಪಾವಿಷ್ಟನಾದ ಮತ್ತು ಭಾವನಾವಶನಾದ ಭೀಮನನ್ನು ಕೋಪಾವಿಷ್ಟವಾದ ಮತ್ತು ವಿಕಾರವಶವಾದ ಆನೆಗೆ ಹೋಲಿಸಲಾಗಿದೆ. ವಿಕಾರವಶವಾದ ಆನೆಯನ್ನು ಬಿಡುವುದಕ್ಕೆ ಬದಲು ಸಾಂತ್ವನಗೊಳಿಸುವಂತೆ ಯುಧಿಷ್ಠಿರನು ಭೀಮನನ್ನು ಸಾಂತ್ವನಗೊಳಿಸಲು ಮುಂದಿನ ಶ್ಲೋಕಗಳಲ್ಲಿ ಪ್ರವರ್ತಿಸುವನು. ಉಪಮಾಲಂಕಾರ

2. अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे तव गिरां विस्तरे मतिः आदर्शे इव विमला अभिदृश्यते ।

अपवर्जितः विप्लवः यस्य सः अपवर्जितविप्लवः (बहुव्रीहिः) ಇದು ಭೀಮನ ಮಾತು ಮತ್ತು ಕನ್ನಡಿ ಎರಡಕ್ಕೂ ವಿಶೇಷಣ. विप्लवः ಯುಕ್ತಿಗೆ ವಿರುದ್ಧವಾದ ಅಂಶಗಳು, अपवर्जित ಇಲ್ಲದೇ ಇರುವುದು. ಕನ್ನಡಿಗೆ ಅನ್ವಯವಾದಾಗ 'ಕೊಳೆಯಿಲ್ಲದ' ಎಂದರ್ಥ. आदर्शः ಕನ್ನಡಿ (ಶ್ಲೇಷದಿಂದ ಮಾಡಿದ ಉಪಮಾಲಂಕಾರ).

3. पदैः स्फुटता न अपाकृता, अर्थगौरवं च न न स्वीकृतम्, गिरां पृथगर्थता रचिता, क्वचिदपि सामर्थ्यं च न अपोहितं ।

न अपाकृता ಬಿಡಲ್ಪಟ್ಟಿಲ್ಲ. पृथगर्थता ಅರ್ಥವೈವಿಧ್ಯ, ಅರ್ಥವೈಶಿಷ್ಟ್ಯ. सामर्थ्यम् ಪದಾರ್ಥಗಳ ಅನ್ಯೋನ್ಯ ಸಾಪೇಕ್ಷತೆ. न अपोहितम् ಬಿಡಲ್ಪಟ್ಟಿಲ್ಲ.

4. बलात् उपपत्तिः उदाहृता, अनुमानेन आगमः च न क्षतः, ईदृक् इदम् अनीदृगाशयः कः प्रसभं वक्तुमुपक्रमेत ?

बलात् ಬಲವನ್ನೇ ಆಶ್ರಯಿಸಬೇಕೆಂಬ ಪಕ್ಷವನ್ನು ಸಮರ್ಥಿಸುವ, उपपत्तिः ಯುಕ್ತಿಗಳು, अनुमानेन ಯುಕ್ತಿಗಳಿಂದ, आगमः ನೀತಿಶಾಸ್ತ್ರ, ईदृक् ಇಷ್ಟೊಂದು ಕ್ಷಾತ್ರ ತೇಜಸ್ಸಿನಿಂದ ಕೂಡಿದ್ದನ್ನು ईदृक् आशयः यस्य सः, न ईदृगाशयः—अनीदृगाशयः ಇಷ್ಟೊಂದು ಕ್ಷಾತ್ರತೇಜಸ್ಸಿಲ್ಲದೆ ಇರುವವನು. प्रसभं (ಅವ್ಯಯ) ಬಲವತ್ತರವಾಗಿ.

5. तथापि मे हृदयमवितृप्ततया निर्णयमेव धावति, विधेयेषु विशेषसम्पदः सुखं अवसाययितुं क्षमाः न (भवन्ति)

निर्णयमेव धावति ನಿರ್ಣಯಮಾಡಲು ಇನ್ನೂ ಆಲೋಚಿಸಲು ಧಾವಿಸುತ್ತದೆ.

विधेयेषु ಸಂಧಿ, ವಿಗ್ರಹ ಇತ್ಯಾದಿ ಕರ್ತವ್ಯಗಳ ವಿಷಯದಲ್ಲಿರುವ, विशेष-संपदः ಸೂಕ್ಷ್ಮವಾದ ವೈಶಿಷ್ಟ್ಯಗಳು, सुखं ಸುಲಭವಾಗಿ, ಅನಾಯಾಸವಾಗಿ,

अवसाययितुम् ತಿಳಿದುಕೊಳ್ಳಲು, न क्षमाः ಬರುವುದಿಲ್ಲ. ಇಲ್ಲಿ ನಿರ್ಣಯಕ್ಕೆ ಧಾವಿಸಲು ಎರಡನೇ ಸಾಲಿನಲ್ಲಿ ಹೇತುಗಳನ್ನು ಕೊಟ್ಟಿರುವುದರಿಂದ ಕಾವ್ಯ-ಲಿಂಗಾಲಂಕಾರ.

**6.** क्रियां सहसा न विदधीत, अविवेकः परम् आपदां पदं, गुणलुब्धाः सम्पदः विमृश्यकारिणं स्वयमेव वृणुते हि ।

विदधीत धा (डुधाञ् धारणपोषणयोः) ಧಾತುವಿನ ಲಿಜ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

विमृश्यकारी ಆಲೋಚಿಸಿ ಕಾರ್ಯಕ್ಕೆ ತೊಡಗುವವನು.

वृणुते वृञ् वरणे ಧಾತುವಿನ ಲಟ್ ಲಕಾರ ತೃತೀಯ ಪುರುಷ ಬಹುವಚನ. ಅರ್ಥಾಂತರನ್ಯಾಸಾಲಂಕಾರ.

**7.** शुचि श्रुतं वपुः भूषयति, तस्य प्रशमः अलंक्रिया भवति, पराक्रमः प्रशमाभरणं, सः नयापादितसिद्धिभूषणः ।

श्रुतं ಶಾಸ್ತ್ರ, प्रशमः ಸಹನೆ. नयः ರಾಜನೀತಿ, ಏಕಾವಲ್ಯಲಂಕಾರ.

**8.** स्पृहणीयगुणैः महात्मभिः चरिते वर्त्मनि मनः यच्छतां विधिहेतुः आगसाम् अहेतुः विनिपातः अपि समुन्नतेः समः ।

आगस् ಅಪರಾಧ, आगसामहेतुः ಅಪರಾಧ ಮೂಲವಲ್ಲದ.

**9.** बलवान् अपि यः कोपजन्मनः तमसः अभिभवं न रुणद्धि सः क्षयपक्षः ऐन्दवीः कला इव सकलाः शक्तिसम्पदः हन्ति ।

तमसः ಅಜ್ಞಾನದ, ವಿವೇಚನಾ ಶೂನ್ಯತೆಯು, अभिभवः ಆಕ್ರಮಣ रुणद्धि रुधिरावरणे ಧಾತುವಿನ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ. क्षयपक्षाः ಕೃಷ್ಣ ಪಕ್ಷ. इन्दोः इमाः ऐन्दवीः ಚಂದ್ರನ, शक्ति संपदः ಪ್ರಭು, ಮಂತ್ರ, ಉತ್ಸಾಹ ಶಕ್ತಿಗಳ ಸಂಪತ್ತು.

**10.** अतिपातितकालसाधना स्वशरीरेन्द्रियवर्गतापनी अक्षमा भवन्तं जनवत् नयसिद्धेः अपनेतुं नार्हति ।

अतिपातित ಮೀರಿಹೋದ, अतिपातितानि कालः साधनानि यया सा अतिपातितकालसाधना (बहुव्रीहिः), अपनेतुं ತಪ್ಪಿಸಲು.

**11.** मदमानसमुद्धतं नृपं मूढता नियमेन न वियुङ्क्ते, अतिमूढः नयात् उदस्यते, नयहीनात् जनः अपरज्यते ।

उदस्यते ಬೇರ್ಪಡಿಸಲ್ಪಡುವನು, उद् + अस (अस भुवि) ಧಾತುವಿನ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ, अपरज्यते ಉದಾಸೀನರಾಗುವರು.

**12.** अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसंततिः रिपुः महानपि तरुवत् सहिष्णुना उन्मूलयितुं सुकरः ।

अपरागः समीरणः इव तेन ईरितः, अपरागः ಜನತೆಯ ಅಪ್ರಿಯತೆ. समीरणः ಗಾಳಿ, ईरितः ಪ್ರೇರಿತವಾದ, क्रमेण शीर्णा आकुला मूलसंततिः यस्य सः, क्रमशीर्णाकुलमूलसंततिः, शीर्ण ಶಿಥಿಲವಾದ, आकुल ಚಲಿಸುವ, मूलसंततिः ಬೇರುಗಳು. (ಶತ್ರುವಿಗೆ ವಿಶೇಷಣವಾದಾಗ) ಸ್ವಜನರು.

**13.** इति आकुलं अर्जुनाग्रजं नयवर्त्म अनाकुलं अनुशासतं तं पराशरात्मजः स्वयं अभिवाञ्छितः अर्थं इव अमीयाय ।

अनाकुलम् ಅಸಂಕೀರ್ಣವಾಗಿ, ನಿರ್ದುಷ್ಟವಾಗಿ, अनुशासतम् ಉಪದೇಶಿಸಿದ, अभिवाञ्छितः ಅಪೇಕ್ಷಿಸಿದ, अमीयाय इण् गतौ ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

**14.** अथ उच्चैः परार्ध्यात् आसनतः धूतारुणवल्कलाग्रः सः कीर्णकपिशांशु-जालः सुमेरोः शृङ्गात् उद्यन् तिग्मरश्मिरिव रराज ।

उच्चैः (ಅವ್ಯಯ) ಎತ್ತರವಾದ, परार्ध्य ಶ್ರೇಷ್ಠ, उद्यन् ಎದ್ದು ನಿಂತು, धूतानि अरुणानि वल्कलाग्राणि यस्य सः धूतारुणवल्कलाग्रः ಚಲಿಸುತ್ತಿರುವ ನಸುಗೆಂಪಾದ ನಾರು ಬಟ್ಟೆಯುಳ್ಳ, कीर्णं आकपिशं अंशुजालं यस्य सः कीर्णकपि-शांशजालः. कीर्ण ಹರಡಿರುವ, कपिश ಕಂದು ಬಣ್ಣದ, अंशुजाल ಕಿರಣಗಳ ಸಮೂಹ, तिग्मरश्मिः ತೀಕ್ಷ್ಣವಾದ ಕಿರಣಗಳುಳ್ಳ ಸೂರ್ಯ.

**15.** सः नरेन्द्रः अवहितचित्तः ऋषिप्रवरे ऋषिवत् गुरूपदिष्टाम् अर्हां विधाय पश्चात् तदनुमतं आसनं प्रशमः श्रुतम् इव अलंचकार ।

अर्हां ಪೂಜೆ, प्रशमः ಶಾಂತಿ.

---

# ೪. दशरथबाणहतस्य मुनिपुत्रस्य विलापः

ಈ ಭಾಗವನ್ನು ಕುಮಾರದಾಸನಿಂದ ವಿರಚಿತವಾದ 'ಜಾನಕೀಹರಣ' ಎಂಬ ಕಾವ್ಯದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. 'ಜಾನಕೀಹರಣ'ವು ಸಂಪೂರ್ಣವಾಗಿ ಉಪಲಬ್ಧವಾಗಿಲ್ಲ. ಈ ಮಹಾಕಾವ್ಯದ ಹತ್ತು ಸರ್ಗಗಳು ಮಾತ್ರ ಉಪಲಬ್ಧ ವಾಗಿವೆ. ದಶರಥನು ಬೇಟೆಯಾಡಲು ಹೋಗಿ ಮುನಿಪುತ್ರನನ್ನು ಬಾಣದಿಂದ ಹೊಡೆದು ಶಾಪಗ್ರಸ್ತನಾಗಿ ಅಯೋಧ್ಯೆಗೆ ಮರಳಿದ ಕಥೆಯಿಂದ ಆರಂಭಿಸಿ, ಪಂಚ ವಟಿಯಲ್ಲಿ ರಾವಣನು ಸನ್ಯಾಸಿಯ ವೇಷದಿಂದ ಸೀತೆಯನ್ನು ಅಪಹರಿಸುವವರೆಗಿನ ಕಥೆಯು ಈ ಹತ್ತು ಸರ್ಗಗಳಲ್ಲಿ ಬಂದಿದೆ. ಕುಮಾರದಾಸನ ಶೈಲಿಯು ಸುಲಭ ವಾಗಿದೆ. ಅನೇಕ ಕಡೆ ಕಾಳಿದಾಸನನ್ನು ಅನುಸರಿಸಲು ಪ್ರಯತ್ನಿಸಿದ್ದಾನೆ. ಆದುದರಿಂದಲೇ—

जानकीहरणं कर्तुं रघुवंशे स्थिते सति।
कविः कुमारदासो वा रावणो वा यदि क्षमः ॥

ರಘುವಂಶದ ರಾಜನಾದ ಶ್ರೀರಾಮನಿರುವಾಗ ರಾವಣನು ಸೀತೆಯನ್ನು ಅಪಹರಿ ಸುವ ಧಾರ್ಷ್ಟ್ಯವನ್ನು ಮಾಡಿದಂತೆ ಕಾಲಿದಾಸನ ರಘುವಂಶಮಹಾಕಾವ್ಯವು ಇದ್ದರೂ ಕುಮಾರದಾಸನು ಜಾನಕೀಹರಣವೆಂಬ ಕಾವ್ಯವನ್ನು ಬರೆಯುವ ಧಾರ್ಷ್ಟ್ಯವನ್ನು ಮಾಡಿದ್ದಾನೆ ಎಂಬ ಪ್ರತೀತಿ ಇದೆ.

ಇವನ ಈ ಮಹಾಕಾವ್ಯದ ಮೊದಲನೆಯ ಸರ್ಗದ ಕೊನೆಯ ಭಾಗವಿದು. 'ದಶರಥನು ನೀರು ತುಂಬುವ ಬಿಂದಿಗೆಯ ಸದ್ದನ್ನು ಆನೆಯ ಸದ್ದೆಂದು ಭ್ರಮಿಸಿ ಮುನಿಪುತ್ರನಿಗೆ ಬಾಣವನ್ನೆಸೆದನು. ಇದರಿಂದ ವೃದ್ಧರಾದ ತಂದೆ ತಾಯಿಗಳಿಗೆ ಏಕಮಾತ್ರ ಸಹಾಯಕನಾದ ತನಗೆ ಒದಗಿ ಬಂದ ವಿಪತ್ತಿನಿಂದ ದುಃಖಿಸುತ್ತಿರುವ ಮುನಿಪುತ್ರನ ವಿಲಾಪದ' ಭಾಗವನ್ನು ಇಲ್ಲಿ ಕೊಡಲಾಗಿದೆ.

**1.** अथ प्रभाते प्रजानां प्रभुः हरिप्रभावः सज्जनगीतकीर्तिः बद्धायुधः सः सज्जीकृतं बंधुरवर्मजालं हरिमारुरोह ।

हरिप्रभावः ಇಲ್ಲಿ ಹರಿಶಬ್ದಕ್ಕೆ ಸೂರ್ಯ, ವಿಷ್ಣು ಎಂದು ಎರಡು ಅರ್ಥ ಗಳನ್ನು ಮಾಡಬಹುದು. ಸೂರ್ಯನಂತೆ ಪ್ರಭಾವಶಾಲಿಯು, ವಿಷ್ಣುವಿನ ಅವತಾರನಾದ ಶ್ರೀರಾಮನು ಇವನ ಉದರದಲ್ಲಿ ಜನಿಸುವುದರಿಂದ ಹರಿ ಪ್ರಭಾವನು ಎಂದೂ ಕವಿಯ ಆಶಯವಿರಬಹುದು.

सज्जनैः गीता कीर्तिः यस्य सः ಸಜ್ಜನರಿಂದ ಪ್ರಶಂಸಿಸಲ್ಪಡುವ, सज्जीकृतम् असज्जः सज्जः संपद्यमानः कृतः तम् ಸಜ್ಜುಮಾಡಲ್ಪಟ್ಟ.

**2.** आयतचापदण्डः अन्वयकेतुभूतः असौ मार्गणगोचरे कंचित् मृगं दृष्ट्वा शरभोरुवेगं शरं प्रसह्य मुमुक्षुः तमन्वयात ।

बन्धुरवर्मजालम् - बन्धुरं वर्मणः जालम् यस्य सः तम्, अन्वयस्य केतुभूतः ವಂಶಕ್ಕೆ ಕೀರ್ತಿಯಂತಿದ್ದ, केतुः ಧ್ವಜ, आयतः चापदण्डः यस्य सः ಹೆದೆಯೇರಿದ ಧನುಸ್ಸನ್ನು ಹಿಡಿದ, मार्गणस्य गोचरः तस्मिन् ಬಾಣಕ್ಕೆ ನಿಲುಕುವ ಪ್ರದೇಶದಲ್ಲಿದ್ದ, शरभोरुवेगं शरभस्येव उरुः वेगः यस्य सः तम् ಶರಭ ಮೃಗದಷ್ಟು ತೀಕ್ಷ್ಣವಾದ ವೇಗವುಳ್ಳ. ಶರಭ ಮೃಗವು ಹಿಮಾಚ್ಛಾದಿತ ಪರ್ವತ ಪ್ರದೇಶಗಳಲ್ಲಿರುವ ಬಹಳ ವೇಗಶಾಲಿಯಾದ ಒಂದು ಮೃಗ. ಇದು ಸಿಂಹಕ್ಕಿಂತಲೂ ಬಲಿಷ್ಠವಾಗಿರುತ್ತದೆ. ಇದಕ್ಕೆ 'अष्टपाद्' 'महास्कन्धिन्' ಎಂದು ಹೆಸರುಗಳಿರುವುವು.

**3.** नृपमार्गणानां मार्गं विलंघ्य गगने रयेण रेखायमाणः असौ मृगोत्तमः तमसातटस्थं तपस्यद्भवनं वनं प्रपेदे ।

मार्गणः ಬಾಣ, रयेण ವೇಗದಿಂದ, (ಶ್ಲೋಕದಲ್ಲಿರುವ रयेन ಎಂಬುದನ್ನು रयेण ಎಂದು ತಿದ್ದಿಕೊಂಡು ಓದಬೇಕು.) तपस्यतां भवनं ತಪಸ್ವಿಗಳಿಗೆ ಆಶ್ರಯ ಸ್ಥಾನವಾದ.

**4.** धनुस्सहायः नृवीरः असौ अश्मवति प्रदेशे वाहं विहाय तरूणां घने गहने तत्पददत्तदृष्टिः सहसा पद्भ्यां चचार ।

प्र+पद (पद-संचलने) ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ. अश्मवति ಕಲ್ಲು ಬಂಡೆಗಳಿಂದ ಕೂಡಿದ, वाहः ಕುದುರೆ, तत्पददत्तदृष्टिः तस्य पदेषु दत्ता दृष्टिः येन सः ಆ ಜಿಂಕೆಯ ಹೆಜ್ಜೆಗಳನ್ನೇ ದಿಟ್ಟಿಸುತ್ತ.

**5.** तस्याः अपि तटे घटपूरणस्य रवं श्रुत्वा बृंहितनादशङ्की मनुवंशकेतुः शरण्योऽपि मुनेः बाले तनूजे शरं मुमोच ।

रवः ಧ್ವನಿ, ಸದ್ದು, बृंहितस्य नादः तं शङ्कते इति बृंहितनादशङ्की ಆನೆಯ ಧ್ವನಿಯೆಂಬ ಭಾವನೆಯುಳ್ಳವನಾಗಿ, शरणे साधुः शरण्यः ಶರಣಾಗತ ರಕ್ಷಕ, तनूजः ಮಗ.

**6.** पत्रिविभिन्नमर्मा मुनेः पुत्रः शरानुसारेण प्रयातं तं नृपं नेत्राम्बुदिग्धेन विलापनाम्ना बाणेन भूयः हृदि जघान ।

पत्रिणा विभिन्नं मर्म यस्य सः पत्रिविभिन्नमर्मा ಮರ್ಮ ಸ್ಥಾನದಲ್ಲಿ ಬಾಣದಿಂದ ಛೇದಿಸಲ್ಪಟ್ಟ, नेत्रयोः अम्बूनि तैः दिग्धः तेन नेत्राम्बुदिग्धेन ಕಣ್ಣೀರು ತುಂಬಿದ, भूयः ಎಂಬ ಅವ್ಯಯವು ಇಲ್ಲಿ 'ಪ್ರತಿಯಾಗಿ' ಎಂಬ ಅರ್ಥದಲ್ಲಿ ಉಪಯೋಗಿಸಲ್ಪಟ್ಟಿದೆ.

**7.** जरावेशजडीकृतस्य व्रतजीर्णमूर्तेः विचक्षुषः अनाथस्य गुरुद्वयस्य वने एकोऽयं आलम्बनदण्डस्तु त्वया किं भग्नः ?

जरायाः आवेशेन जडीकृतः तस्य ವಾರ್ಧಕ್ಯದಿಂದ ಕ್ಷೀಣವಾದ ಶರೀರೇಂದ್ರಿಯಗಳಿರುವ, व्रतेन जीर्णा मूर्तिः यस्य सः तस्य.

**8.** लक्ष्यमेकं साधयता त्वया निरागः त्रितयमपि विनाशं नीतम्। वने मच्चक्षुषा कल्पितदृष्टिकृत्यौ वृद्धौ मे पितरौ अहं च।

निर्गतः आगः यस्य तत् निरागः ನಿರಪರಾಧಿಯಾದ, मच्चक्षुषा कल्पित-दृष्टिकृत्यौ ನನ್ನ ಕಣ್ಣುಗಳಿಂದಲೇ ಕಣ್ಣಿನ ಕೆಲಸಗಳನ್ನು ನಿರ್ವಹಿಸಿಕೊಳ್ಳುತ್ತಿರುವ, ಕಣ್ಣಿಲ್ಲದ, कल्पितं दृष्टिकृत्यं ययोः तौ कल्पितदृष्टिकृत्यौ, लक्ष्यम् ಗುರಿ.

**9.** वनेषु मृगयूथमध्ये वासः, वृद्धांधजनस्य च पोषः क्रिया, वृत्तिश्च वन्यं फलम्, एषु को घातहेतुर्दोषो मयि सम्भावितः ?

यूथः ಹಿಂಡು, वृत्तिः ಜೀವನೋಪಾಯ, ಆಹಾರ.

**10.** व्रती विनाथः विगतापराधः स्मर्तव्यदृष्टेः पितुः अन्धयष्टिः इत्येषु निष्करुणेन कश्चित् हेतुः अवध्यभावे किं न गणितः ?

स्मर्तव्यदृष्टेः ಕಣ್ಣಿಲ್ಲದ, अन्धयष्टिः ಕುರುಡನ ಕೈಗೋಲು.

**11.** वनेषु कठिनाः तरुत्वचः वसानः शीतोष्णनिपीतसारः अस्वादुवन्याशन-जीर्णशक्तिः अयं तव कृपायाः पात्रं वध्यभूतः।

शीतोष्णाभ्यां निपीतं सारं यस्य सः ಛಳಿ ಮತ್ತು ಬಿಸಿಲುಗಳಿಂದ ಶಕ್ತಿಯು ಕುಗ್ಗಿದ, न स्वादु अस्वादु च तत् वन्यं च अस्वादुवन्यं तस्य अशनं तेन जीर्णा शक्तिः यस्य सः ರುಚಿ ಇಲ್ಲದ, ಅಡವಿಯಲ್ಲಿ ಬೆಳೆದ ಆಹಾರ ಸೇವನೆಯಿಂದ ಶಕ್ತಿಯು ಕುಂದಿದ.

**12.** जतुन्यासनिरुद्धरंध्रः जीर्णः कुंभः मौञ्जी च तरुवल्कलश्च एतेषु मां विनिहत्य यद् गम्यं तद्गृह्यतां, भवान् कृतार्थोऽस्तु।

जतुनः न्यासः तेन निरुद्धं रन्ध्रं यस्य सः ಅರಗನ್ನಿಟ್ಟು ರಂಧ್ರ ಮುಚ್ಚಿದ.

**13.** साधुः प्रीत्यर्थसंमीलितं कृपामन्थरं अक्षि शत्रौ आदधाति । नीचस्तु तत्पूर्वसंपादितदर्शनेऽपि निष्कारणवैरशीलः ।

कृपया मन्थरम् च तत् अक्षि ದಯೆಯಿಂದ ತುಂಬಿದ ದೃಷ್ಟಿಯನ್ನು, तत्पूर्वसंपादितदर्शने ತನ್ನನ್ನೇ ಮೊದಲು ದರ್ಶನಮಾಡಿ ಗೌರವಿಸಿದವನ ಮೇಲೆಯೂ, ತನಗೆ ಮೊದಲಿನಿಂದಲೂ ಪರಿಚಿತನಾಗಿದ್ದವನ ಮೇಲೆಯೂ.

**14.** हेतिबलोपनीतस्मयः नीचस्य अधिकर्मनिष्ठां गच्छन् किमपि उन्नतवृत्ति स्वं कुलं कस्मै हेतवे कलङ्कैः कलुषीकरोति ?

हेतीनां बलं तेन उपनीतः स्मयः यस्य सः हेतिबलोपनीतस्मयः ಬಾಣಗಳ ಬಲದಿಂದ ಅಹಂಕಾರವುಳ್ಳವನಾದ, किमपि ಅವರ್ಣನೀಯವಾಗಿ, उन्नता वृत्तिः यस्य तत् ಘನವಾದ ನಡತೆಯುಳ್ಳ, नीचस्य निष्ठाम् अधिकर्म गच्छन् ನೀಚರ ವರ್ತನೆಯನ್ನು ನಿನ್ನ ಕಾರ್ಯಗಳಲ್ಲಿ ವ್ಯಕ್ತಪಡಿಸುತ್ತ, कस्मै हेतवे ಯಾವ ಉದ್ದೇಶಕ್ಕಾಗಿ, भवान् कलुषीकरोति.

**15.** अक्षतसाधुवृत्तं अदृष्टभावं एनं भवान् एवं मा स्म जुगुप्सताम् इति निगृहीतकण्ठैः प्राणैः महर्षिसूनोः वाचः अरुध्यन्त इव ।

अक्षतं साधुवृत्तं यस्य सः ಅವಿಚ್ಛಿನ್ನವಾದ ಸದ್ವರ್ತನೆಯುಳ್ಳ.

**16.** यमप्रभावः घटितारिनाशः भोज्यासुतः बाष्पायमाणः चारुभुजद्वयेन घटं गृहीत्वा बहुमानपात्रं यमिनं ददर्श ।

भोज्यासुतः ಭೋಜರಾಜಕುಮಾರಿಯಾದ ಇಂದುಮತಿಯ ಮಗನಾದ ದಶರಥನು. ಈ ಪ್ರಯೋಗದಿಂದ ಕುಮಾರದಾಸನಿಗೆ ಕಾಲಿದಾಸನು ರಘುವಂಶದಲ್ಲಿ ಇಂದುಮತಿಯನ್ನು ಭೋಜರಾಜಕುಮಾರಿ ಎಂದು ನಿರ್ದೇಶಿಸಿದುದು ಮತ್ತು ದಶರಥನು ಇಂದುಮತಿಯ ಮಗನೆಂದು ನಿರ್ದೇಶಿಸಿದುದು ತಿಳಿದಿತ್ತೆಂದು ಕಂಡುಬರುತ್ತದೆ. घटितः अरीणां नाशः येन सः घटितारिनाशः.

**17.** विधातृतुल्येऽपि पापं विधाय सतां पुरोगः सत्यापयामास । ततः यतिं घातयतः अस्य देहं क्रोधानलेन सद्यो न ददाह ।

विधात्रा तुल्यः तस्मिन् विधातृतुल्ये ಸೃಷ್ಟಿ ಕರ್ತನಷ್ಟು ಪೂಜ್ಯನಾದ, पुरः गच्छतीति पुरोगः ಪ್ರಮುಖ, सत्यापयामास ಸತ್ಯವನ್ನು ಹೇಳಿದನು. 'ಸತ್ಯ' ಎಂಬ ಪದದಿಂದುಂಟಾದ ನಾಮ ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ. घातयतः–हन् हिंसागत्योः ಧಾತುವಿನ ಣಿಚ್ ರೂಪದ ವರ್ತಮಾನ ಕರ್ತರಿ ಕೃದಂತ.

**18.** तनयस्य नाशं श्रुत्वा दयानुयातः स वशी महर्षिः मुहुः आत्तशोकः देशस्तुतसद्गुणाय विश्वभुजं विशं शापं दिदेश ॥

दयया अनुयातः दयानुयातः ದಯೆಯಿಂದ ಕೂಡಿದ, विशम् ವ್ಯಾಪಕ ವಾದ, विश्वभुजम् ಪ್ರಪಂಚಕ್ಕೇ ಪರಿಣಾಮವನ್ನು ಉಂಟುಮಾಡುವ, ಶಾಪದ ಈ ಎರಡು ವಿಶೇಷಣಗಳು ರಾಮನ ವನವಾಸ ಪರ್ಯವಸಾಯಿಯಾಗಿ ಪ್ರಪಂಚಕ್ಕೇ ದುಃಖವುಂಟುಮಾಡಿದ್ದನ್ನು ಸೂಚಿಸುವುವು. देशेषु स्तुताः सद्गुणाः यस्य तस्मै देशस्तुतसद्गुणाय.

**19.** नृपतिः वनजकुसुमधारिणीं हरिनखपातविपाटितोरुगण्डां अलंघ्यां मृगव्य-भूमिं श्रियमिव चिरमनुभूय गृहोन्मुखो बभूव ॥

हरेः नखानां पातैः विपाटिताः उरुगण्डाः यस्यां सा तां ಸಿಂಹಗಳ ಉಗುರು ಗಳ ಆಘಾತದಿಂದ ಸೀಳಲ್ಪಟ್ಟ ವಿಶಾಲವಾದ ಗಂಡಸ್ಥಳಗಳಿರುವ ಆನೆಗಳಿಂದ ತುಂಬಿದ, मृगव्यस्य भूमिः मृगव्यभूमिः ಬೇಟೆಯಾಡುವ ಅಡವಿ.

**20.** अथ स विषमपादगोपितार्थं जगदुपयोगवियुक्तभूरिधातुं बहुतुहिननिपात-दोषदुष्टं कुकवेः प्रबन्धमिव गिरिमरहत् ॥

विषमैः पादैः गोपिताः अर्थाः यस्मिन् सः तं विषमपादगोपितार्थम् ನಿಮ್ನೋನ್ನತವಾದ ತಪ್ಪಲು ಪ್ರದೇಶಗಳಿಂದ ಹುದುಗಿದ ಸಂಪತ್ತಿರುವ.

जगतः उपयोगः तस्मात् वियुक्ताः भूरि धातवः यस्य तं जगदुपयोगवियुक्त-भूरिधातुम् ಜಗತ್ತಿನ ಉಪಯೋಗಕ್ಕೆ ಸುಲಭವಾಗಿ ದೊರಕದಿರುವ ಅನೇಕ ಧಾತು ಗಳಿಂದ ಕೂಡಿದ, बहुतुहिनं, तस्य निपातः, तस्य दोषेण दुष्टः तम् बहुतुहिन-निपातदोषदुष्टम् ಬಹಳ ಹಿಮ ಬೀಳುವಿಕೆಯ ದೋಷದಿಂದ ಕೂಡಿದ.

ಕುಕವಿ ಪ್ರಬಂಧಕ್ಕೆ ಅನ್ವಯಿಸಿದಾಗ ಮೇಲಿನ ವಿಶೇಷಣಗಳಿಗೆ ನ್ಯೂನಾಕ್ಷರ ಮತ್ತು ಅಸ್ಫುಟಾರ್ಥಗಳಿಂದ ಕೂಡಿದ, ಸಾಮಾನ್ಯ ಬಳಕೆಯಲ್ಲಿಲ್ಲದ ಅನೇಕ ಧಾತುಗಳ ಪ್ರಯೋಗವುಳ್ಳ, ತು, ಹಿ, ನ ಇತ್ಯಾದಿ ಅನೇಕ ನಿಪಾತಗಳಿಂದ ತುಂಬಿದ ಎಂದರ್ಥ.

---

## ५. क्रिया केवलमुत्तरम्

ಈ ಭಾಗವನ್ನು ಮಾಘ ಕವಿಯ ಶಿಶುಪಾಲವಧ ಮಹಾಕಾವ್ಯದಿಂದ ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಮಹಾಭಾರತದ ಸಭಾಪರ್ವದಲ್ಲಿ ಬರುವ ರಾಜಸೂಯ ಯಾಗದಲ್ಲಿ ಅಗ್ರಪೂಜೆಯ ವಿಷಯದಲ್ಲಿ ಉಂಟಾದ ವಿವಾದ, ಶಿಶುಪಾಲನು ಶ್ರೀಕೃಷ್ಣನಿಗೆ ಅಗ್ರಪೂಜೆಯನ್ನು ವಿರೋಧಿಸುವುದು, ಶ್ರೀಕೃಷ್ಣ ಮತ್ತು ಶಿಶುಪಾಲರಲ್ಲಿ ಯುದ್ಧ, ಶಿಶುಪಾಲನ ವಧೆ, ಇವೇ ಈ ಕಾವ್ಯದ ಕಥಾವಸ್ತುಗಳು. ಈ ಕಥಾವಸ್ತುವಿನ ಮುಖ್ಯ ಭಾಗವು 13ನೆಯ ಸರ್ಗದ ನಂತರವೇ ಬರುವುದು. ಮೊದಲಿನ 13 ಸರ್ಗಗಳಲ್ಲಿ ಕವಿಯು ತನ್ನ ಪ್ರತಿಭೆಯಿಂದ ಮುಂದಿನ ಕಥಾವಸ್ತುವಿಗೆ ಶ್ರೇಷ್ಠವಾದ ಹಿನ್ನೆಲೆಯನ್ನು ರಚಿಸಿದ್ದಾನೆ. ಶಿಶುಪಾಲವಧವು ಸಂಸ್ಕೃತದಲ್ಲಿ ಪ್ರಸಿದ್ಧವಾದ ಪಂಚ ಮಹಾಕಾವ್ಯಗಳಲ್ಲಿ ಒಂದಾಗಿದೆ. ಈ ಕವಿಯ ಕಾವ್ಯ ರಚನಾ ಕೌಶಲ್ಯದ ವಿಷಯದಲ್ಲಿ ಕೆಳಗಿನ ಶ್ಲೋಕವು ಜನಜನಿತವಾಗಿದೆ.

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥

ಉಪಮಾನಗಳನ್ನು ಕೊಡುವುದರಲ್ಲಿ ಕಾಲಿದಾಸನದು ಎತ್ತಿದ ಕೈ. ಅರ್ಥಪುಷ್ಟಿಯನ್ನು ತರುವುದರಲ್ಲಿ ಭಾರವಿಯು ಪ್ರಸಿದ್ಧನು. ದಂಡಿಯ ದಶಕುಮಾರ ಚರಿತ್ರದಲ್ಲಿ ಪದಲಾಲಿತ್ಯವು ಚಿತ್ತಾಕರ್ಷಕವಾಗಿದೆ. ಆದರೆ ಮಾಘನ ಶಿಶುಪಾಲ-ವಧದಲ್ಲಿ ಈ ಮೂರನ್ನೂ ಕಾಣಬಹುದು. ಈ ಲೋಕೋಕ್ತಿಯಿಂದ ಮಾಘನ ಜನಪ್ರಿಯತೆಯು ವ್ಯಕ್ತವಾಗುತ್ತದೆ. ಮಾಘ ಕವಿಯು ಭಾರವಿಯ ಮಾರ್ಗವನ್ನೇ ಅನುಸರಿಸಿ ಅವನನ್ನು ಮೀರಿಸಲು ಪ್ರಯತ್ನಿಸಿದ್ದಾನೆ. ಭಾರವಿಯ ಮಹಾ ಕಾವ್ಯದಂತೆಯೇ ಇಲ್ಲಿಯೂ ಪರ್ವತ, ಸಮುದ್ರ, ಋತುಗಳು, ಯುದ್ಧ ಇತ್ಯಾದಿಗಳ ವರ್ಣನೆ ಇದೆ. ಖಡ್ಗಬಂಧ, ಮುರಜಬಂಧ ಇತ್ಯಾದಿ ಬಂಧಗಳಲ್ಲಿಯ ಕೌಶಲ್ಯವನ್ನು ತೋರಿಸಿದ್ದಾನೆ. ರಾಜನೀತಿಯನ್ನು ಚರ್ಚಿಸುವ ಆವೇಶಪೂರ್ಣವಾದ ಸಂವಾದಗಳೂ ಇವೆ. ಮಾಘ ಕವಿಯ ಶಬ್ದಸಂಪತ್ತು ಭಾರವಿಯ ಶಬ್ದಸಂಪತ್ತಿಗಿಂತ ಹೆಚ್ಚಾಗಿದೆ.

नवसर्गगते माघे नवशब्दो न विद्यते

ಮಾಘನ ಕಾವ್ಯದಲ್ಲಿ 9 ಸರ್ಗಗಳನ್ನು ಓದಿದ ನಂತರ ತಿಳಿಯಬೇಕಾದ ಹೊಸ ಶಬ್ದವೇ ಇರುವುದಿಲ್ಲ ಎಂಬ ಇವನ ಕೀರ್ತಿಯು ಇವನ ಅಪಾರವಾದ ಶಬ್ದ ಸಂಪತ್ತನ್ನು ಸೂಚಿಸುತ್ತದೆ. ಇವನ ಕಾವ್ಯವು ಪ್ರೌಢವೂ ಕ್ಲಿಷ್ಟವೂ ಆಗಿ

ಪಂಡಿತಪ್ರಿಯುವಾಗಿದ್ದರೂ ಅನೇಕ ಸುಂದರವಾದ ಉಪಮಾನಗಳು, ಕಲ್ಪನೆಗಳು, ಹಾಗೂ ವಿಚಾರಗಳಿಂದ ಕೂಡಿದೆ.

ಈ ಭಾಗದಲ್ಲಿ ಶಿಶುಪಾಲವಧದ 2ನೆಯ ಸರ್ಗದಲ್ಲಿ ಬರುವ ಉದ್ಧವ ಬಲರಾಮ ಮತ್ತು ಶ್ರೀಕೃಷ್ಣರ ಸಂವಾದದಲ್ಲಿಯ ಬಲರಾಮನ ಮಾತುಗಳನ್ನು ಆಯ್ದುಕೊಳ್ಳಲಾಗಿದೆ. ಇಲ್ಲಿ ಬಲರಾಮನು ಕೃತ್ರಿಮ ಮತ್ತು ಸಹಜ ಹೀಗೆ ಎರಡು ರೀತಿಯಿಂದಲೂ ಶತ್ರುವಾದ ಶಿಶುಪಾಲನ ವಿಷಯದಲ್ಲಿ ಉದಾಸೀನ ಭಾವವು ಒಳ್ಳೆಯದಲ್ಲ ಎಂದು ವಾದಿಸುತ್ತಾನೆ.

**1.** भवतोः गिरः तासां भवद्गिराम् ನಿಮ್ಮಿಬ್ಬರ ಮಾತುಗಳಿಗೆ, अवसरः ಅವಕಾಶ, पूर्वरङ्गः ನಾಟಕವು ಆರಂಭವಾಗುವುದಕ್ಕಿಂತ ಮೊದಲು ರಂಗಕ್ಕೆ ಉಂಟಾಗಬಹುದಾದ ವಿಘ್ನಗಳನ್ನು ಪರಿಹರಿಸಲು ಮಾಡುವ ಪೂಜೆ.

यन्नाट्ये वस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः प्रकीर्तितः ॥
(ವಸಂತರಾಜೀಯ)

प्रसङ्गाय प्रसञ्जनाय ಪ್ರಾರಂಭಿಸಲು, ಪ್ರತಿವಸ್ತೂಪಮಾಲಂಕಾರ.

**2.** पथ्यं ಹಿತವನ್ನು, वत्स्यन्तौ ಅಭಿವೃದ್ಧಿ ಹೊಂದುತ್ತಿರುವ, ಬೆಳೆಯುತ್ತಿರುವ, आमयः ರೋಗ, ಉಪಮಾಲಂಕಾರ.

**3.** सात्वतीसूनुः ಶಿಶುಪಾಲನು, मह्यं अपराध्यति 'क्रुधद्रुहेर्ष्यार्थानां यं प्रति कोपः' ಎಂಬ ಸೂತ್ರದಂತೆ ಇಲ್ಲಿ 'मह्यं' ಎಂಬುದು ಚತುರ್ಥಿಯಲ್ಲಿ ಉಪಯೋಗಿಸಲ್ಪಟ್ಟಿದೆ.

**4.** अङ्ग ಸಂಬೋಧಿಸುವ ಸಂದರ್ಭದಲ್ಲಿ ಉಪಯೋಗಿಸುವ ಅವ್ಯಯ, सन्दिग्धे – सम् + दिह् ಲಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ. ಇಲ್ಲಿ ಸಾಮಾನ್ಯದಿಂದ ವಿಶೇಷವನ್ನು ಸಮರ್ಥಿಸುತ್ತಿರುವುದರಿಂದ ಅರ್ಥಾಂತರನ್ಯಾಸಾಲಂಕಾರ.

**5.** यावदर्थपदां—यावान् अर्थः यावदर्थं (अव्ययीभावः), यावदर्थं पदानि यस्याः सा ताम् ತಿಳಿಸಬೇಕಾದ ಅರ್ಥಕ್ಕೆ ಎಷ್ಟು ಪದಗಳು ಅಗತ್ಯವೋ ಅಷ್ಟೇ ಪದಗಳಿರುವ, ಅಭಿಪ್ರೇತವಾದ ಅರ್ಥವನ್ನು ತಿಳಿಸಲು ಎಷ್ಟು ಪದಗಳು ಅಗತ್ಯವೋ ಅಷ್ಟೇ ಪದಗಳಿರುವ, विरराम ಸುಮ್ಮನಾದನು, रम उपरमे ಧಾತುವಿನ ಲಿಟ್ ತೃತೀಯ ಪುರುಷ ಏಕವಚನ.

**6.** सपत्नस्य अपनयः, तस्य स्मरणेन अनुशयः तेन स्फुरतीति अनुशयस्फुः तेन ಶತ್ರುವು ಮಾಡಿದ ಅಪಕಾರವು ನೆನಪಾಗಿ ಉಂಟಾದ ಖೇದದಿಂದ ಕಂಪಿಸುವ,

